श्रीमद्रामानुजयतीन्द्रविरचितो

# वेदार्थसङ्ग्रहः

चन्द्रिकातिलकव्याख्यया विभूषितः

सम्पादकः, व्याख्याकारश्च

पण्डितश्रीरामवदनशुक्लः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वाराणसी

SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 131 ]

# VEDĀRTHASAṀGRAHA

OF

ŚRĪ MAD RĀMĀNUJAYATĪNDRA

With the Commentary

'CANDRIKĀTILAKA'

BY

ŚRĪ RĀMAVADANA ŚUKLA

EDITED BY

ŚRĪ RĀMAVADANA ŚUKLA

Ex. Principal,

Sri Ramadeshika Sanskrit Mahavidyalaya

Daraganj, Prayaga



VARANASI

1991

**Research Publication Supervisor—**
**Director, Research Institute,**
Sampurnanand Sanskrit University
Varanasi.

**Published by—**
**Dr. Harish Chandra Mani Tripathi**
Publication Officer,
Sampurnanand Sanskrit University
Varanasi–221 002.

**Available at—**
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi–221 002.

**First Edition, 1000 Copies**
**Price Rs. 64·00**

**Printed by—**
**VIJAYA PRESS,**
**Sarasauli, Varanasi.**

सरस्वतीभवन-ग्रन्थमाला

[ १३१ ]

श्रीमद्रामानुजयतीन्द्रविरचितो

# वेदार्थसङ्ग्रहः

चन्द्रिकातिलकव्याख्यया

विभूषितः

व्याख्याकारः सम्पादकश्च

**पण्डितश्रीरामवदनशुक्लः**

प्रधानाचार्यचरः,

प्रयागस्थश्रीरामदेशिकसंस्कृतमहाविद्यालयस्य




वाराणस्याम्

२०४८ तमे वैक्रमाब्दे    १९१३ तमे शकाब्दे    १९९१ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
निदेशकः, अनुसन्धान-संस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी।

□

प्रकाशकः—
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी—२२१ ००२.

□

प्राप्तिस्थानम्—
विक्रय-विभागः,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी—२२१ ००२.

□

प्रथमं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम्— ६४=०० रूप्यकाणि

□

मुद्रकः—
विजय-प्रेस,
सरसोली, वाराणसी।

# प्ररोचना

श्रीमद्रामानुजयतीन्द्रैरनेके ग्रन्थाः प्राणायिषत। तेष्वेक आकारे लघीयान्, सारे गरीयान् कश्चनापूर्वो ग्रन्थः 'वेदार्थसङ्ग्रहः' इति विद्यते। वेदार्थसङ्ग्रहः श्रुतेस्तलस्पर्शिनीव्याख्या। अस्य ग्रन्थस्य ग्रन्थयो विपश्चिद्वर्यैः श्रीरामवदनशुक्लमहाभागैश्चन्द्रिकया टीकया सज्जीकृताः, यया ग्रन्थस्य गम्भीरोऽर्थः झटिति हृदयमानीयते।

वेदार्थसङ्ग्रहे विशिष्टाद्वैतसिद्धान्तस्य श्रुतिमूलत्वं सोपपत्ति प्रादर्शि। अत्र श्रीमद्भगवद्गीतायाः, ब्रह्मसूत्रस्य च विशिष्टाद्वैतेन चैकवाक्यताऽपि व्यवारि।

मन्ये, विशिष्टाद्वैतसिद्धान्तविषये वेदार्थसङ्ग्रहणे चायं ग्रन्थो महानुपकारको भविष्यतीति श्रीरामवदनशुक्लविद्वद्भ्यो धन्यवादान् वितरन् ग्रन्थमिमं प्रकाशयामि। विदुषां परममुदे भूयादिति विदुषां विधेयः—

वाराणस्याम्<br>आषाढशुक्लैकादश्याम्<br>वि० सं० २०४८

विद्यानिवासमिश्रः<br>कुलपतिः,<br>सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

॥ श्रीमते रामानुजाय नमः ॥

# भूमिका

विदितमेवैतद् निगमागमपरतन्त्राणां त्र्यन्तवृद्धानां यत् स्मृतीतिहासपुराणागम-समुपबृंहितेन वेदेन जगत्कारणस्वरूपचेतनपरमपुरुषार्थमोक्षस्वरूपतदुपायस्वरूपतदिति-कर्त्तव्यतास्वरूपतद्विरोधपरिहारा बोध्यन्ते। वेदार्थस्वरूपे वेदार्थसङ्ग्रह इमे वेदोक्त-विषयाः सोपपत्तिकं वर्णिताः सन्ति। तथा हि बद्धमुक्तनित्यजीवभेदेन जीवभेदा जड-रूपेण कालप्रकृतितत्परिणामभेदा अजडस्वरूपा नित्यविभूतयो ब्रह्मजीवतज्ज्ञानादयश्च। तत्र विप्रतिपन्नबुद्धीनां श्रीभास्कर-यादव-श्रीमच्छङ्कराचार्याणां मतान्यप्युपन्यस्तानि। तत्र भास्करमते जीवब्रह्मणोर्भेद औपाधिकः, अभेदस्तु स्वाभाविकः, अचिद्ब्रह्मणो-र्भेदाभेदौ स्वाभाविकौ। यादवप्रकाशमते तु यथा अचिद्ब्रह्मणोर्भेदाभेदौ स्वाभाविकौ, तथा चिद्ब्रह्मणोरपि भेदाभेदौ स्वाभाविकौ। श्रीमच्छङ्कराचार्यमते तु निर्विशेष-चिन्मात्रं ब्रह्म सत्यम्, तदितरज्जगदध्यस्तम्। ब्रह्मरूपाधिष्ठानसाक्षात्काराद‍ृतेऽध्यस्तस्य जगतो निवर्तकान्तराभावाद् ब्रह्मसाक्षात्कारेण जगतो निवृत्तिः। ब्रह्मणि जगतोऽध्या-सस्तु अविद्यामूलकः। अविद्या च आवरणशक्ति-विक्षेपशक्तिशालिनो कश्चिदनिर्वचनीय-भावपदार्थोऽनादिः। जीवेशौ विशुद्धाचित्, तथा जीवेशयोर्भेदा अविद्यातच्चितोर्योगः सदस्माकमनादयस्ते ब्रह्मज्ञाननिवर्त्या मिथ्यारूपा इति मायावादिमतोक्तेः। अविद्याया आवरणशक्त्या तिरोहितस्वरूपं ब्रह्म विक्षेपशक्त्या विविधं त्रिलोकात्मकं जगत् पश्यति। शमदमादिसाधनचतुष्टयेन सदाचार्यनिर्वर्तितेन तत्त्वमस्यादि श्रौतवाक्य-श्रवणतदर्थमनननिदिध्यासनादिना तज्ज्ञानेन जीवस्यावरणशक्तौ नष्टायां यावत्कर्मफल-भोगं जीवन्मुक्तो भूत्वा विक्षेपशक्तौ नष्टायां तदर्जिते त्रिभुवने नष्टे जीवस्स्वयं ब्रह्म-रूपेण राजते। इत्थं शङ्करमताद् यादवप्रकाशमतयोर्वैषम्यं प्रतिपादितमस्ति। इत्थं गूढातिगूढविषया वेदार्थसङ्ग्रहे प्रतिपादिताः। श्रीभाष्यव्याख्यानकारेण श्रीरङ्गनाथ-दत्तव्यासपदवीकेन श्रीसुदर्शनसूरिणा कृतया वेदार्थसङ्ग्रहस्य तात्पर्यदीपिकया टीकया सोपपत्तिकमुक्तविषया आविष्कृताः सन्ति यद्यपि, तथापि सा टीका सूर्यप्रभानु-कारिणी रात्रिकृतान्धकारनिवर्तनेऽक्षमा, इति हेतोर्मया चन्द्रिकानाम्नी टीका वेदार्थ-सङ्ग्रहस्याकारि। अनया टीकया वेदार्थसङ्ग्रहस्य विषया रात्र्यन्धकारनिवृत्तिकामै-र्निर्मत्सरैर्विद्वद्भिर्भोत्स्यन्त एव। इत्थमस्मिन् वेदार्थसङ्ग्रहे विशिष्टाद्वैतसिद्धान्तो निर्णीतः। अस्मिन् सिद्धान्ते पूर्वोत्तरभागभेदेन वर्तमानानां ऋग्यजुःसामाथर्ववेदानां सेतिहासपुराणानां प्रामाण्यमविगीतं राजते।

"स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दन्ति मानवाः"।

इति गीतावचनेन वेदपूर्वभागस्य भगवदाराधनविधानप्रतिपादकत्वम्, उत्तरभागस्य च आराध्यदेवस्य परब्रह्मणो निखिलहेयप्रत्यनीकस्य कल्याणगुणैकतानस्य श्रीमन्नारायणस्य बोधकत्वं प्रामाण्यञ्च। श्रीमच्छङ्कराचार्यस्य आविधिककर्मबोधके वेदपूर्वभागे औदासीन्यम्। पूर्वमोमांसकानां तु कर्मणामेव फलप्रदत्वेन कर्मप्रतिपादके वेदपूर्वभाग एव आदरः। वेदोत्तरभागे औदासोन्यं नापूर्वत्वम्। विशिष्टाद्वैतसिद्धान्ते तु वेदाक्षराणि यावन्ति कथितानि द्विजोत्तमैः, तावन्ति हरिनामानि कीर्तितानि न संशयः—"वेदैरशेषैरहमेव वेद्यः"।

इत्थं सकलवेदस्य प्रामाण्यं भगवद्वचनेन प्रतिष्ठाप्यते। वेदेषु उपनिषद्भागे सगुणश्रुतयः कल्याणगुणविशिष्टब्रह्मबोधिकाः। निर्गुणश्रुतयः हेयगुणप्रत्यनीकब्रह्मबोधिकाः। निर्विकारश्रुतयः कर्मकृतशरोरविकारराहित्य विशिष्टब्रह्मपराः। सविकारश्रुतयः भक्तवात्सल्यक्षमादयादिगुणकृतकर्माकृतविकार विशिष्टपरमात्मपराः। जगद्ब्रह्मणोरभिन्नत्वपराः श्रुतयः शरीरशरीरिभावकृतसामानाधिकरण्यवत्यः, चिदचिद्विशिष्टब्रह्मपरा वा। शरोरवद्ब्रह्मबोधिकाः श्रुतय इच्छागृहोताभिमतोरुदेह इति प्रमाणेन "प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया" इति गीतावचनेन कर्माकृतस्वेच्छागृहोतशरोरत्वपराः। भेदश्रुतयश्च चेतनाचेतनब्रह्मनिमित्तकविभिन्नस्वरूपनिर्देशपराः। इत्थं सर्वे भव्या अर्था वेदार्थसङ्ग्रहे प्रतिपादिताश्चन्द्रिकया टीकया प्रकाशं नोयन्ते। श्रुतिनिर्णीतार्थोपपत्तिप्रकारश्चेत्थं गीयते—

नित्यं हेयगुणावधूननपरा नैर्गुण्यवादाः श्रुती
मुख्यार्थाः सगुणोक्तयः शुभगुणप्रख्यापनाद्ब्रह्मणः।
अद्वैतश्रुतयो विशिष्टविषया निष्कृष्टरूपाश्रया
भेदोक्तिस्तदिहाखिलश्रुतिहितं रामानुजीयं मतम्॥ इति।

रामवदनशुक्लः ( रामकृष्णाचार्यः )
प्रधानाचार्यचरः,
प्रयागस्थश्रीरामदेशिकसंस्कृतमहाविद्यालयस्य

# विषयानुक्रमणिका

श्रीमद्रामानुजयतीन्द्रविरचितो

# वेदार्थसङ्ग्रहः

❁❁❁

## मङ्गलाचरणम्

अशेषचिदचिद्वस्तु शेषिणे शेषशायिने ।
निर्मलानन्तकल्याणनिधये विष्णवे नमः ॥ १ ॥

---

॥ चन्द्रिकातिलकः ॥

कपर्दिमतकर्दमं कपिलकल्पनावागुरां
दुरत्ययमतीत्य तद्द्रुहिणतन्त्रयन्त्रोदरम् ।
कुदृष्टिकुहनामुखे निपततः परब्रह्मणः
करग्रहविचक्षणो जयति लक्ष्मणो यम्मुनिः ॥

वेदार्थसंग्रहविवक्षितवस्तुसूर्यः
लोके सुदर्शनकृतस्तिलकश्चकास्ति ।
तेनात्र मे कृतिरसावफला तथापि
नक्तं तमो हरति शीतकरो न भानुः ॥

श्रीभगवान्भाष्यकारश्रीरामानुजमुनिः 'प्रथमोऽनन्तरूपश्चेत्यादि' वचनसिद्धशेषावतारतया सर्वज्ञत्वेन साक्षात्कृतग्रन्थसमाप्तिप्रतिबन्धकविघ्नात्यन्ताभावोऽपि 'मङ्गलादीनि शास्त्राणि प्रथन्ते' इत्यादि महाभाष्यशिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकं नमस्कारात्मकं वस्तुनिर्देशात्मकञ्च मङ्गलं शिष्यशिक्षायै तदीयविघ्नविघाताय शिष्यकृतपारायणादावनुसङ्गतो मङ्गलाय च निबध्नाति—अशेषचिदचिदिति । अविद्यमानं शेषं येषु, तानि चिदचिद्वस्तूनि, तेषां शेषी तस्मै । शेषमवशिष्टम्, चित्=शेषत्वविशिष्टज्ञानवान् जीवनिकरः, अचित् परिणामास्पदरूपा चतुर्विंशतितत्त्वात्मिका प्रकृतिः, कालश्च शुद्धसत्त्ववैकुण्ठ-

परं ब्रह्मैवाज्ञं भ्रमपरिगतं संसरति त-
त्परोपाध्यालीढं विवशमशुभस्यास्पदमिति ।
श्रुतिन्यायापेतं जगति विततं मोहनमिदं
तमो येनापास्तं स हि विजयते यामुनमुनिः ॥ २ ॥

---

मण्डपादिः, शेषत्वन्न परोद्देशेन प्रवृत्तकृतिव्याप्यत्वम्; अपि तु चन्दनकुसुमताम्बूलादिवद् यथेष्टविनियोगार्हत्वम्, शेषी शेषप्रयोज्यातिशयप्रसादादि परमानुकूलभागी, वस्तुत्वं प्रमेयत्वमनेन विशेषणेन चेतनाचेतनयोः पारमार्थिकत्वमुक्तम्, तेन यादवप्रकाशाभिमतः केवलचेतनवादो निरस्तः । शेषे शेते तच्छील: शेषशायी, तस्मै । शेषो नित्यजीवेषु विलक्षणकैङ्कर्यशाली जीवः, शायी = नित्यसम्बन्धवान्, अनेन विशेषणेन शेषोपलक्षितसकलनित्यमुक्तलक्ष्मीपरिजनभोगनित्यविभूतिमत्वमुच्यते ।

मला दोषा अज्ञानकृताः कामक्रोधादयस्तेभ्यो निष्क्रान्तो निर्मलो निर्दोषोऽनन्तो देशकालवस्तुपरिच्छेदरहितः । कल्याणा ये गुणाः कल्याणगुणाः, अनुकूला ज्ञानानन्दादयस्तेषां निधिस्तस्मै, अथवा अनन्तस्य कल्याणगुणेष्वप्यन्वयः । श्लोकोत्तरार्धेन निखिलहेयप्रत्यनीकत्वकल्याणगुणाकरत्वोभयलिङ्गवत्वमुच्यते, तेन निर्विशेषब्रह्मवादस्यामान्यता व्यज्यते ।

**परमिति०** द्वितीयेनानेन पद्येन श्रीरामानुजमुनिः श्रीयामुनमुनिगुरूत्कर्षवर्णनात्मकस्तवनाक्षिप्तनमस्कारात्मकं मङ्गलं निर्विघ्नग्रन्थपरिसमाप्तये व्यनक्ति । अत्र समाप्तिं प्रति मङ्गलं कारणम्, कार्यकारणयोरेकाधिकरणवृत्तित्वात्, स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्वसम्बन्धेन समाप्तिं प्रति स्वजन्यविघ्नध्वंसवत्वसम्बन्धेन मङ्गलं कारणम्, तेन नास्तिकग्रन्थे न व्यभिचारप्रसङ्गः । परं ब्रह्म समस्तजगदुपादानकारणं तदेवाविद्यातिरोहितं विक्षेपेण विविधभेदान् पश्यति, तेन भ्रमेण नानायोनिसम्बन्धकृतजन्मजरामरणादि संसारभाग् भवति । एवकारेणाचार्यो ब्रह्मणि दुःखयोगित्वश्रुतिसिद्धोभयलिंगत्वयोस्तेजस्तिमिरयोरिव विरोधं व्यनक्ति, इति **शाङ्करमतसंक्षेपः** । तत्परोपाध्यालीढं विवशमिति । परो ब्रह्मणो भिन्नकार्योपाधिस्सत्यभूतं शङ्कराभिप्रेताविद्याविलक्षणस्तेनालीढं सम्बद्धं विवशं कर्म्मपरवशं संसरति योनिकृतयातनाभाग्भवति । अयं शंकरात्स्थूलो ब्रह्मणि वास्तवाविद्यासंपर्कस्वीकारात् । अस्मिन् मते ब्रह्माचेतनयोर्भेदाभेदौ स्वाभाविकौ, ब्रह्मचेतनयोरभेदस्स्वाभाविको भेदस्तु औपाधिको मोक्षेऽभेदश्रुतेः । **अयं भास्कराचार्यमतसंक्षेपः** । अशुभस्यास्पदमिति ब्रह्माचेतनयोः स्वाभाविकभेदाभेदाङ्गीकारात्, अभेदे चेतनगतविकारस्यास्पदम्, चेतनेनापि ब्रह्मणः स्वाभाविकभेदा-

**अशेषजगद्धितानुशासनश्रुतिनिकरशिरसि समधिगतोऽयमर्थः ।**
**जीवपरमात्मयाथात्म्यज्ञानपूर्वकवर्णाश्रमधर्मेतिकर्त्तव्यताकपरम-पुरुषचरणयुगलध्यानार्चनप्रणामादिरत्यर्थंप्रियस्तत्प्राप्तिफलः ।**

---

भेदाङ्गीकाराद् अभेदे चेतनगतदुःखशोकमोहादयो ब्रह्मणि सन्ति, इति **यादव-प्रकाशमतम् ।**

पूर्वोक्तमतत्रयं श्रुतिसत्तर्कदूरम्। श्रुतिदूरं यदि तत्सहायकतया सत्तर्को दवीयान् । जगति विततत्वात् विस्तृतत्वात् पामरमोहकत्वात् तमोरूपत्वाच्च येन श्रीयामुनमुनिनाऽपास्तं खण्डितम्, स विजयते उत्कर्षं लभते श्लोकयुगेन देवगुरू-पासने यस्य देवे पराभक्तिरित्यादिवचनसिद्धे कार्यतया सम्पादिते इति । **अथ स्वपक्षसंक्षेपः ।**

**अशेषं जगत्** सर्वाधिकारिणस्तेषां हितमिष्टसाधनम्, तस्यानुशासनानि विविच्यासारेभ्यः सारान् पृथक्कृत्य शोधिकाः श्रुतयः सदा श्रूयमाणा न कदाचित् केनचिदारब्धा गुरुशिष्यपरम्परयाध्याप्यमाना अधीयमानाः स्वतन्त्रवक्तृपुरुष-संसर्गविधुराः, तन्निष्ठभ्रमप्रमादकरणापाटवदोषकृतत्वशून्यास्तासां निकरो गणः, समस्तशाखात्मकस्तस्य शिर उपनिषद्भागस्तत्र समधिगतः अनधीतशाखान्तरार्थ-प्रतिपादकेतिहासपुराणादिभिः सह निर्णीतोऽयमर्थो जीवेत्यादिवाक्यप्रतिपाद्योऽ-र्थोऽशेषेणेत्यनेन पुरुषार्थचतुष्टयतदुपायप्रतिपादकत्वं श्रुतेरुक्तम् । परमहितत्वेन मोक्षस्यैव बोधनमुचितमिति न शङ्क्यम्, जीवानामर्थादिफलस्वाम्यवत्वेनान-धिकारनिरूपणप्रसंगात् । श्येनयागस्य शत्रुवधरूपपापजनकस्य विधिः खलशत्रु-निग्रहार्थः शास्त्रविश्वासशून्यानां तदिष्टप्रापणे न तत्र विश्वासोत्पादनार्थः श्येन-यागेनाप्याराधितो देव एव फलं ददाति इति देवैश्वर्यप्रदर्शनार्थश्च । **हितानुशासन-**पदेन वेदस्य प्रत्यक्षानुमितिभ्रमपरिगतानां जीवानां प्रत्यक्षाद्यनवगतभ्रमविषया-र्थप्रतिपादकत्वं निरस्तम्, अपौरुषेयत्वेन प्रमेयं विहाय भ्रमविषयार्थप्रतिपादकत्वा-सम्भवात् ।

जीवः शेषत्वे सति ज्ञानवान् अणुरानन्दस्वरूपोऽनेको नित्यः परमात्मा शेषी ज्ञानवान् विभुरेको नित्यो निखिलहेयप्रत्यनीकोऽनन्तकल्याणगुणनिधिः, तयोर्याथा-त्म्यज्ञानम्, यथार्थज्ञानम्, व्यावर्तकधर्मवत्त्वेन ज्ञानम्, इदं ज्ञानं साधनाधारशिला-तत्पूर्वकः परमपुरुषचरणयुगलध्यानार्चनप्रणामादिः, स च वर्णाश्रमधर्मेतिकर्त्तव्य-ताकः, अत्यर्थंप्रियः परमपुरुषप्राप्तिफलकः सकलवेदान्ततात्पर्यार्थः जीव-परमात्म-याथात्म्यज्ञानपदेन तत्त्वमसीतिवाक्यस्य सूक्ष्मचिदचिद्विशिष्टः स्थूलचिदचिद्-विशिष्टब्रह्मणोरभेदप्रतिपादकत्वं न निर्विशेषचिन्मात्रबोधकत्वमिति सूचितम् ।

अस्य जीवात्मनोऽनाद्यविद्यासंचितपुण्यपापरूपकर्मप्रवाहहेतुक-ब्रह्मादिसुरनरतिर्यक्स्थावरात्मकचतुर्विधदेहप्रवेशकृततत्तदात्माभिमान-जनितावर्जनीयभवभयविध्वंसनाय देहातिरिक्तात्मस्वरूपतत्स्वभावतद-न्तर्यामिपरमात्मस्वरूपतत्स्वभावतदुपासनतत्फलभूतात्मस्वरूपाविर्भाव-पूर्वकानवधिकातिशयानन्दब्रह्मानुभवज्ञापने प्रवृत्तं हि वेदान्तवाक्य-जातम् ।

---

ज्ञानपूर्वकपदेन ज्ञानजन्यपरमपुरुषार्चनप्रणामादेर्मोक्षोपायत्वप्रतिपादनेन वाक्यार्थज्ञानस्य मोक्षकारणात्वाभावो बोधितः, वाक्यार्थज्ञानस्य जीवपरमात्म-स्वरूपं ज्ञानस्य ध्यानार्चनप्रणामादिजनकत्वम् । वर्णाः ब्राह्मणादयः, आश्रमा ब्रह्मचर्यादयः, तानधिकृत्य विहितधर्माः अग्निहोत्रादिपञ्चमहायज्ञाद्यनुष्ठानयजन-याजनाध्ययनाध्यापनादयः, ते ध्यानादौ दर्शपूर्णमासषट्के, इति कर्तव्यता-काङ्क्षाशामकप्रयाजादिवत्, अङ्गभूताः न ब्रह्मज्ञानेच्छामात्रप्रयोजका, न वा भास्कराभिमतज्ञानसमकक्षसमुचितोपायभूताः, परमपुरुषपदेन छत्रचामरायितो-भयलिङ्गविशिष्टः पुरुषोत्तमः सूच्यते । ध्यानादिपदेन भगवत्प्राप्तिफलोद्देशेन प्रियतयाऽनुष्ठीयमानो ध्यानादिर्विवक्षितः । ध्यानं विजातीयप्रत्ययाव्यवहित-सजातीयधारावाहिनी प्रीत्यात्मकस्मृतिसन्ततिः, सैव तैलधारावदविच्छिन्न-स्मृतिसन्तानरूपेण विवक्षिता । अर्चनं देवोद्देशेनार्घपाद्यादिपूर्वकचन्दनकुसुमादि-समर्पणोपचारः । प्रणामः साष्टाङ्गः—आदिपदेन कीर्तनादयः । एवं त्रिविधं कायिकं वाचिकम्मानसस्त्रिविधकर्मात्मकम् उपासनं मोक्षोपायः, ध्यानस्य प्राधान्येऽपि परविद्यापेक्षया प्राधान्येनार्चनश्रेणिपाठः । वेदनज्ञानादिपदेन मोक्षोपायत्वबोधनेऽपि पशुछागन्यायेन वेदनस्य सामान्यस्य विशेषध्यानपरत्वम् ।

ननु तत्त्वमसीतिवाक्यमखण्डार्थपरं षड्विधतात्पर्यलिङ्गैरुपक्रमोपसंहार-फलापूर्वताऽभ्यासार्थवादोपपत्तिरूपैर्निर्विशेषे ब्रह्मणि तात्पर्यावधारणाद् अखण्ड-वाक्यार्थज्ञानं मोक्षोपायः । तिरोधानविक्षेपशक्तिशालिनी अनिर्वचनीयाभावरूपाऽ-विद्या संसारबन्धहेतुः, तन्निवृत्तिर्मोक्षः । नोक्तार्थे वेदान्तवाक्यजातस्य तात्पर्यमत आह अस्येत्यादि । भवतु नाम तथा यद्यविद्या मिथ्या स्यात्, तन्निवृत्तेर्वाक्यार्थज्ञान-मात्रेण सम्भवात्; किन्तु अविद्या सत्यभूता । सत्यस्य सर्पस्य न नायं सर्पो रज्जु-रियमिति ज्ञानेन निवृत्तिः, अपितु गरुडध्यानेन । तत्सत्यत्वं साधयितुमुपक्रमते; अस्य प्रत्यक्षसिद्धस्य शब्दैकसमधिगम्यात् परमात्मनो विरुद्धस्वरूपस्य जीवस्यावर्जनीय-भवभयविध्वंसः अशक्यः, सहस्रधा मिथ्यात्वबोधनेऽपि अबाध्यत्वात् । भवभयस्य

तत्त्वमसि। अयमात्मा ब्रह्म य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद। यस्यात्मा शरीरं य आत्मानमन्तरो यमयति, स त आत्मान्तर्याम्यमृतः, एष सर्वभूतान्तरात्मा अपहत पाप्मा दिव्यो देव एको नारायणः, तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति, यज्ञेन दानेन तपसाऽनाशकेन ब्रह्मविदाप्नोति परम्, तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यते इत्यादिकम्।

---

सत्यता च तत्तद्देहेषु तत्तदात्माऽभिमानजनितत्वात्। अविद्या चानात्मनि आत्मबुद्धिः, अस्वस्मिन् स्वबुद्धिश्च। तया सञ्चित उत्पादितः पापपुण्यात्मककर्मप्रवाहः।

पापमेवाविद्यया भवतीति न शक्यम्, पुण्यस्यापि ब्रह्मात्मके जीवे स्वात्मकत्वज्ञानरूपयाऽविद्यया जातत्वात्। तद्धेतुको ब्रह्मादि सुरनरतिर्यक्स्थावरात्मकदेहप्रवेशः, तेन जातं यत्तत्तद्देहे स्वतादात्म्याऽभिमानं तज्जनितं भवभयमवर्जनीयं मिथ्यात्वज्ञानानिवर्त्यम्। तस्य भवभयस्य जन्मजरामरणादेर्विध्वंसाय देहातिरिक्तात्मस्वरूपं पञ्चभूतशरीरभिन्नज्ञानानन्दाणुनित्यलक्षणम्। तत्स्वभावो भगवच्छेषत्वम्। जीवान्तर्यामिस्वरूपं विभुत्वं स्वामित्वं ज्ञानानन्दादित्वम्। तत्स्वभाव आश्रितवात्सल्यं तदुपासनं साङ्गं त्रिविधं ध्यानार्चनप्रणामात्मकम्। तत्फलमुपासनफलम्। आत्मस्वरूपाविर्भावः, ज्ञानानन्दभगवच्छेषत्वाद्याकारलयाविर्भावः, तत्पूर्वको योऽनवधिकोऽवधिशून्यः, अनतिशयः, सापेक्षातिशयशून्यः, आनन्दो यत्र तद्ब्रह्म तस्य अनुभवः, तस्य ज्ञापने बोधने प्रवृत्तं वेदान्तवाक्यजातम्।

उक्तार्थे प्रमाणमुपन्यस्यति—तथाहि तत्त्वमसि चिदचिच्छरीरकं ब्रह्म बोधयति तथा सत्येव पतञ्जलिप्रोक्तं सामानाधिकरण्यं सम्भवेत्, तेन जीवपरमात्मनोर्भेदसिद्धिः। अयमात्मा ब्रह्म इति, जीवस्य ब्रह्मात्मकत्वं बोधयति सर्वस्य ब्रह्मात्मकत्वे अन्तर्यामिब्राह्मणं प्रमाणयति, य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः। अनेन ब्रह्मणो जीवान्तर्यामितया जीवात्मनोच्यते। अपरमप्यन्तर्यामिब्राह्मणं प्रमाणयति एष 'सर्वभूतान्तरात्मा अपहत पाप्मा दिव्यो देव एको नारायणः' अनेन दुःखान्वितजीवान्तर्यामित्वेऽपि नारायणस्यापुरुषार्थासम्पर्को बोध्यते। ध्यानार्चनप्रणामादिरूपस्योपासनस्य वर्णाश्रमधर्माङ्गकत्वं श्रौतं प्रतिष्ठापयति। तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति, यज्ञेन दानेन तपसाऽनाशकेनेति श्रुतिः। अत्र यागादिकर्मणां ध्यानादि, ध्यानात्मकज्ञानं तज्जनकत्वमुच्यते, नेच्छामात्रजनकत्वम्। असिना जिघांसतीत्यत्रासेर्हननं साधनत्वे सत्येव तदिच्छा कारणत्वस्य निर्णयात्।

**जीवात्मनः स्वरूपं देवमनुष्यादिप्रकृतिपरिणामविशेषनानाविधभेदरहितं ज्ञानानन्दैकगुणम्, तस्यैतस्य कर्मकृतदेवादिभेदे विध्वस्ते स्वरूपभेदो वाचामगोचरः। स्वसंवेद्यो ज्ञानस्वरूपमित्येतावदेव निर्देश्यम्, तच्च सर्वेषामात्मनां समानम्।**

---

'ब्रह्मविदाप्नोति परमिति' वचनेन ब्रह्मोपासनस्यैव मोक्षसाधनत्वमुच्यते। इममर्थं स्फुटीकरोति तमेवं विद्वानमृत इह भवति, नान्यः पन्था विद्यते अयनायेति श्रुतिः। अनया कर्मणः कारणत्वं व्यवच्छिद्यते।

जीवभेदपरस्परभेदजीवपरमात्मस्वरूपभेदानाम् उपबृंहणानुगृहीतश्रुत्यर्थतां मनसिकृत्य जीवस्वरूपं निरूपयति। मनुष्ये देवभेदो मनुष्याकृतिः, पशौ मनुष्यभेदः पश्वाकृतिः, इत्थं भेदाः प्रकृतिपरिणामनिष्ठाः, न तु जीवनिष्ठाः, तादृशभेदरहितं जीवस्वरूपं तत्र प्रमाणम्, तथात्मा प्रकृते सङ्गादहम्मानादिदूषितः भजते, प्राकृतान् धर्मानन्यस्तेभ्योऽपि सोऽव्ययः, पुमान्न देवो न नरो न पशुर्न च पादपः शरीराकृतिभेदास्तु भूपैते कर्मयोनयः। जीवात्मनि मनुष्याद्याकृतयः, तत्तद्देहात्माभिमानकृतपुण्यपापलब्धाः भ्रमविषयाः। ज्ञानानन्दैकगुणाः ज्ञानानन्दस्वरूपाश्च, अतः ज्ञानत्वावच्छिन्नप्रतियोगिताकभेदः आनन्दत्वावच्छिन्नप्रतियोगिताकभेदश्च परस्परं न तिष्ठतः, ज्ञानानन्दत्वयोः सर्वजीवेषु सत्वात्। तत्तज्जीवव्यक्तिभेदस्तु व्यक्तित्वेन परस्परं तिष्ठत्येव मनुष्यशरीरानुयोगिकतया प्रतीयमानः पशुप्रतियोगिकभेदोऽपि जीवे न तिष्ठति।

इदमुक्तं भवति जीवभेदस्त्रिविधः—देवाद्यभिमानविशेष्यत्वेन, व्यक्तित्वेन, ज्ञानत्वेन च। प्रथमद्वितीयरूपाभ्यां जीवेषु तृतीयरूपेण भेदाः प्रतीताः सन्ति, प्रतेजा न सन्ति। मनुष्यादिशरीरनिष्ठभेदा अपि जीवेषु न तिष्ठन्ति, तेषां मनुष्यत्वादिरूपत्वात्। तथा जीवस्य ज्ञानानन्दगुणकत्वे तत्स्वरूपत्वे प्रमाणं निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः, दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः, जीवात्मनः स्वरूपं ज्ञानरूपमानन्दरूपञ्च ज्ञानानन्दगुणकञ्च स्वाभाविकम्। धर्मरूपं ज्ञानं घटादिविषयं दुःखसुखरूपेण भासते, स्वरूपभूतन्तु ज्ञानं स्वरूपविषयं न कदाचित्प्रतिकूलं भाषते, कर्मकृते देवादिशरीरे विध्वस्ते धर्मभूतं ज्ञानमपि सदानन्दरूपेण स्वाभाविकेन राजते। जीवस्वरूपस्य भेदो वाचामगोचरः, पशुमनुष्यदेवादिशब्दाव्यवहार्यः। स्वसंवेद्यः स्वरूपज्ञानविषयः, स्ववाचकज्ञानब्रह्मात्मादिशब्दाभिलप्यमित्यर्थः। ज्ञानस्वरूपमित्येव निर्देश्यम् औपाधिकभेदे नष्टे देवादिशब्दगोचरत्वेऽपि न स्वाभाविकस्वरूपवाचकज्ञानादिशब्दगोचरत्वमपि। तच्च ज्ञानरूपं सर्वेषां जीवानां समानम्, ज्ञानत्वेनैकम्।

अथेश्वरस्वरूपमुच्यते, एवंविधचिदचिदात्मकप्रपञ्चस्योद्भवस्थितिप्रलयसंसारनिवर्तनैकहेतुभूतः। समस्तहेयप्रत्यनीकतयाऽनन्तकल्याणैकतानतया च स्वेतरसमस्तवस्तुविलक्षणस्वरूपोऽनवधिकातिशयासंख्येयकल्याणगुणगणः सर्वात्मपरब्रह्मपरज्योतिः परतत्त्वपरमात्मसदादिशब्दभेदैः निखिलवेदान्तवेद्यो भगवान् नारायणः पुरुषोत्तम इत्यन्तर्यामिस्वरूपम्।

अस्य च वैभवप्रतिपादनपराः श्रुतयः स्वेतरसमस्तचिदचिद्वस्तुजातान्तरात्मतया निखिलनियमनं तच्छक्तितदंशतद्विभूतितद्रूपतच्छरीरतत्तनुप्रभृतिभिः शब्दैः तत्सामानाधिकरण्येन च प्रतिपादयन्ति।

---

अथेश्वरस्वरूपमित्यादि। अन्तर्यामि ब्राह्मणोक्तान्तर्यामिस्वरूपमुच्यते—चित्, जीवः, अचित्, मिश्रसत्वं शुद्धसत्त्वशून्यात्मकं तत्त्वम्, तत्स्वरूपस्य प्रपञ्चस्य विस्तृतकार्यजातस्योद्भव उत्पत्तिः, स्थितिः, रक्षा, प्रलयः, संहारः, संसारो जन्मजरामरणादिस्तन्निवर्तनं नाशः, तदेकहेतुर्निमित्तोपादानश्च। एतेन ब्रह्मणि जगत्कारणत्वमोक्षप्रदत्व उक्ते। समस्तहेयानि दुःखाज्ञानशोकमोहादयस्तत्प्रत्यनीकत्वेन, तदत्यन्ताभाववत्तया, अनन्तत्वेन, त्रिविधपरिच्छेदराहित्येन, कल्याणगुणा आनन्दगुणास्तेषामेकतानोविश्वाधारस्तत्वेन च स्वेतरसमस्तवस्तुविलक्षणो न तृणादिवत्स्वेतरविलक्षणः, अपि तु पूर्वोक्तधर्मैरुपास्यत्वप्राप्यत्वोपयोगिनिरवधिकनिरतिशयकल्याणगुणानन्दाश्रितवात्सल्यदयादानदाक्षिण्यादिगुणगणैर्विशिष्टः सर्वेषामात्मा सर्वात्मा तच्छब्देन। परं ब्रह्म नाम स्वरूपतो गुणतो बृहत्त्वविशिष्टार्थः, तद्वाचकेन ब्रह्मशब्देन, परज्योतिः सर्वोत्तमप्रकाशः, तद्वाचकेन परज्योतिःशब्देन, परतत्त्वं स्वतन्त्राबाधितप्रत्ययविषयार्थस्तद्वाचकेन परतत्त्वशब्देन, परमात्माशेषी शरीराध्यासयोग्यताशून्यात्मा तद्वाचकेन परमात्मशब्देन, सत्सर्वकालसम्बन्धितत्त्वं सत्पदार्थः, तद्वाचकेन सच्छब्देन निखिलवेदान्तवेद्यो भगवान्, उभयव्यावर्तकलिङ्गविशिष्टो नारायणः, उभयविभूतिस्वामी पुरुषोत्तमः समस्तोभयविभूतिविलक्षणः, अन्तर्यामिदेवोऽस्ति। इत्यसाधारणधर्मविशिष्टान्तर्यामिस्वरूपम्।

भेदश्रुत्यादिना जगतो भिन्नतया प्रतिपन्नस्य परमात्मनो भेदप्रतिपादकश्रुत्याऽऽपतितविरोधं परिहरन्नाह—अस्य चेत्यादि। "भोक्ता भोग्यं प्रेरितारञ्च मत्वा" इत्यादि श्रुत्या, "परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्, विष्णोरंशो द्विजोत्तमः, विष्णोरेता विभूतयः, परस्य ब्रह्मणो रूपम्, जगत्सर्वं शरीरं ते, तत्सर्वं वै हरेस्तनुः, तानि सर्वाणि तद्वपुः" इत्यादि स्मृतिभिश्च चेतनाचेतनभिन्नतया प्रतिपन्नस्य तस्य परमात्मनो यस्यात्मा शरीरम्, यस्य पृथ्वी शरीरमित्यादि-अन्तर्यामिब्राह्मणेन चेतनाचेतनशरीरशरीरितया प्रतिपन्नस्य

**अथ शाङ्करमतसंक्षेपः—**

तस्य वैभवप्रतिपादनपराणामेषां सामानाधिकरण्यादीनां विवरणे प्रवृत्ताः केचन निर्विशेषज्ञानमात्रमेव ब्रह्म, तच्च नित्यमुक्तस्वप्रकाशस्वभावमपि तत्त्वमस्यादिसामानाधिकरण्यावगतजीवैक्यं ब्रह्मैवाज्ञं बध्यते मुच्यते च। निर्विशेषचिन्मात्रातिरेकी शेशितव्याद्यनन्तविकल्पस्वरूपं कृत्स्नं जगन्मिथ्या कश्चिद्बद्धः, कश्चिन्मुक्त इतीयं व्यवस्था न विद्यते। इतः पूर्वं केचन मुक्ता इत्ययमर्थोऽपि मिथ्या। एकमेव शरीरं जीववन्निर्जीवानीतराणि। तच्छरीरं किमिति न व्यवस्थितम्। आचार्यो ज्ञानोपदेष्टा मिथ्या। शास्त्रप्रमाता च मिथ्या। शास्त्रं च मिथ्या। शास्त्रजन्यं ज्ञानं मिथ्या। एतत्सर्वं मिथ्याभूतेन शास्त्रेणावगम्यते। इति वर्णयन्ति।

---

च वैभवं महत्त्वव्यापकत्वम्, तत्प्रतिपादनपराः श्रुतयः 'सर्वं खल्विदं ब्रह्म','ऐतदात्म्यमिदं सर्वम्', 'तत्त्वमसि' इत्याद्याः, जीवः पुण्यविशेषाद्देवः, पापविशेषात्पशुः, इत्यत्र शरीरशरीरिवाचकपदयोर्यथा सामानाधिकरण्यम्। अयं गौः, शुक्लः पटः, चलो गौरित्यत्र च जातिगुणक्रियावाचकशब्दानां द्रव्यवाचकपदैः यथा सामानाधिकरण्यम्, अपृथक्सिद्धविशेषणवाचकपदानां विशेष्यपर्यन्ताभिधायित्वमिति निर्णयात्। तथा शरीरवाचकेदमादि शरीरवाचकसर्वपदेन तथा त्वम्पदेन च शरीरिवाचकब्रह्मादिपदस्य सामानाधिकरण्येन अपराः श्रुतयः शक्ति-अंश-तनु-विभूत्यादिशब्दैर्ब्रह्मात्मादिशब्दानां सामानाधिकरण्येन च चेतनाचेतनयोर्नियाम्यत्वं बोधयन्ति।

द्वितीयश्लोकपूर्वार्द्धप्रतिपादितपक्षत्रये शाङ्करमतसंग्रहं विवृणोति **तस्येत्यादिना**। तस्य भेदश्रुत्या 'द्वा सुपर्णा,' 'भोक्ता भोग्यं प्रेरितारम्' इत्यादिकया समस्तचिदचिद्विलक्षणतया प्रतिपन्नस्य परमात्मनः वैभवप्रतिपादनपराणां समस्तजगदीश्वरत्वप्रतिपादनपराणामेषां 'तत्त्वमसि,' 'सर्वं खल्विदं ब्रह्म,' 'आत्मैवेदं सर्वम्' इत्यादिसामानाधिकरण्यानां यस्यात्मा शरीरमित्यादिघटकश्रुतिवचनानां नेह नानास्ति किञ्चनेत्यादिभेदनिषेधवचनानां विवरणे प्रवृत्ता व्याख्याने कृतयत्नाः केचन इति विरुद्धा वर्णयन्ति इत्यनेनान्वयः।

निर्विशेषं ज्ञातृत्वज्ञेयत्वादिरहितं ज्ञानरहितञ्च ज्ञानमात्रमंशतोऽपि जडत्वरहितं ज्ञानमेव ब्रह्म। 'तत्त्वमसि' वाक्यस्य भागत्यागलक्षणया चिन्मात्रपरत्वात्। स यथा सैन्धवघन इति वाक्येन अंशतोऽपि जडत्वनिषेधात्। 'न दृष्टेर्द्रष्टारं पश्ये' इति वाक्येन तत्र द्रष्टृत्वनिषेधाच्च। यस्य मतं तस्य मतमिति वाक्येन ज्ञेयत्वनिषेधात्।

**अथ भास्करमतसंक्षेपः—**

अपरे तु अपहतपाप्मत्वादिसकलकल्याणगुणोपेतमपि ब्रह्म तेनैवैक्यावबोधेन केनचिदुपाधिविशेषेण सम्बद्धं बद्धचते, मुच्यते च। नानाविधमलरूपपरिणामास्पदं च, इति व्यवस्थिताः।

यादवप्रकाशाचार्यमतसङ्क्षेपः। अन्ये पुनरैक्यावबोधयाथात्म्यं वर्णयन्तः स्वाभाविकनिरतिशयापरिमितोपरगुणसागरं ब्रह्मैव। सुरनरतिर्यक्स्थावरनारकिस्वर्ग्यपवर्गिचेतनैकस्वभावं स्वभावतो विलक्षणमविलक्षणं विपदादिनानाविधमलरूपपरिणामास्पदं च, इति प्रत्यवतिष्ठन्ते।

---

निर्विशेषचिन्मात्रमेवेति एवकारेण सविशेषप्रतिपादकवचनानां न तत्त्वावेदकत्वमिति सूचितम्। तच्च ब्रह्म नित्यमुक्तस्वप्रकाशस्वभावमपि स्वप्रकाशस्य नित्यमुक्तस्य स्वरूपेण नित्यप्राप्तप्रकाशस्य स्वस्वरूपाज्ञानं न सम्भवति, तत्पूर्वकबन्धोऽपि न, प्रकाशस्य स्वरूपस्य नित्यत्वात्।

किन्तु तत्त्वमस्यादिवाक्यावगतं जीवेनैक्यं यस्यैवम्भूतं ब्रह्मैवाज्ञं बध्यते मुच्यते च। श्रुतिसिद्धस्य जीवैक्यस्याभ्युपगमे भेदश्रुतिसिद्धानामीशेशितव्यादीनामभ्युपगमो न वाच्यः। सर्वं खल्विदमित्याद्यद्वैतश्रुतिबलेन भेदावेदकश्रुतीनां मिथ्यात्वात्, इत्याह, निर्विशेषचिन्मात्रातिरेकी शेशितव्याद्यनन्तविकल्पस्वरूपं सर्वं जगन्मिथ्या। तदद्वैतश्रुतिबलेनैव कश्चिद्बद्धः, कश्चिन्मुक्त इति व्यवस्थानिश्चयो न। 'शुको मुक्तो वामदेवोऽपि मुक्तः' इति श्रुतिसिद्धा मुक्तिरपि मिथ्या, इत्याह, इतः पूर्वं केचन मुक्ता इत्यर्थो मिथ्येति। रथगत्या सारथिवत्, चेष्टादिना शरीराणामात्मवत्त्वमनुमितम्। सुखदुःखव्यवस्थया आत्मभेदे सिद्धे बन्धमोक्षव्यवस्थापि सम्भवतीति न वाच्यम्, एकमेव शरीरं जीववन्निर्जीवाणीतराणीति श्रुतेः। तेनात्मभेदमूलबद्धमुक्तव्यवस्थाऽसम्भवः। एकस्यापि शरीरवतो जीवस्य श्रवणमननादिना लब्धाद्वैतज्ञानस्य मुक्तिर्भवेदित्यपि न। तच्छरीरं किमिति न व्यवस्थितमिति नोक्तव्यवस्थासम्भवः। दृश्यमानशरीरेषु कस्मिंश्चित् शरीरे ब्रह्म जीवत्वेनास्ति। स सर्वं सजीवं पश्यति। अद्यावधि न मुक्त इति भावः। शिष्याचार्यभेदेनात्मबहुत्वं स्यादित्यपि न। अद्वैतश्रुतिबलेनैवाचार्यो ज्ञानवानुपदेष्टा मिथ्या। शास्त्रजन्यं ज्ञानं मिथ्या। एतत्सर्वं मिथ्याभूतेन शास्त्रेणैवावगम्यते।

द्वितीयश्लोकपूर्वार्द्धपरमतत्रये भास्करमतसङ्ग्रहः। पापशून्यत्वकल्याणगुणाकरत्वगुणोपेतमपि ब्रह्म तेनैवैक्यावबोधेन 'तत्त्वमसि', 'सर्वं खल्विदं ब्रह्म' इति श्रुतिजन्यब्रह्मप्रपञ्चैक्यावबोधेन, भेदश्रुत्या ब्रह्मणोऽचिताभेदेनाभेदश्रुत्या स्वाभाविकेना-

**शाङ्करमतनिराकरणम्—**

**तत्र प्रथमे पक्षे श्रुत्यर्थपर्यालोचनपरान् दुष्परिहारान् दोषानुदाहरन्ति, तथा हि प्रकृतपरामर्शितच्छब्दावगतस्य ब्रह्मणः स्वसङ्कल्पकृतजगदुदयविभवलयादयः। 'तदैक्षत बहु स्यां प्रजायेय' इत्यारभ्य 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इत्यादिभिर्वेदैः प्रतिपादिताः तत्सम्बन्धितया प्रकरणान्तरनिर्दिष्टाः सर्वज्ञता-सर्वशक्तित्व-सर्वेश्वरत्व-सर्वप्रकारत्व-समाभ्यधिकनिवृत्तिसत्यकामत्व-सत्यसङ्कल्पत्वसर्वावभासकत्वाद्यनवधिकातिशयासंख्येयकल्याणगुणाः अपहतपाप्मेत्याद्यनेकवाक्यावगतनिरस्तनिखिलदोषता च सर्वे तस्मिन् पक्षे विहन्यन्ते।**

---

भेदेन च, मोक्षेऽभेदश्रुतेः, संसारदशायां भेदश्रुतेश्च जीवब्रह्मणोः स्वाभाविकेनाभेदेन, औपाधिकेन भेदेन च, अचिद्गतपरिणामास्पदं ब्रह्मैव। केनचिदुपाधिविशेषेण सत्येन 'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्', 'क्षरात्मानावीशते' इत्यादि श्रुतिबोधितेन सम्बद्धम्, संयुक्तम्, बध्यते, जन्मजरामरणभाक् तेन मुच्यते, तदा मुक्तो भवति। इति बन्धमोक्षव्यवस्थाप्युपपद्यते।

द्वितीयश्लोकपूर्वार्द्धगतयादवप्रकाशमतसंङ्ग्रहः। एषां मते सर्वज्ञत्वादिगुणबोधकश्रुत्या ब्रह्मणः सर्वगुणत्वम्। तत्त्वमसीति श्रुत्या जीवेन स्वाभाविकाभेदः। यस्यात्मा शरीरमित्यादिभेदश्रुत्या स्वाभाविकभेदश्च। तथा 'सर्वं खल्विदं ब्रह्म' इति श्रुत्या अचिता-स्वाभाविकाभेदः। यस्य पृथ्वीशरीरमिति श्रुत्या स्वाभाविकभेदाश्च स्वीकृताः सन्ति। अन्ये यादवप्रकाशाचार्या ऐक्यावबोधयाथात्म्यं वर्णयन्तः यथार्थत्वानवबोधेऽपि तदभिमानेन तत्कथयन्तः स्वाभाविकाः कर्मानुपार्जिताः। नित्या निरतिशयाः स्वावधिकातिशयशून्याः, अपरिमिताः परिच्छेदरहिता उदारा उत्कृष्टा ये गुणाः, तेषां सागरा यत्र तद्ब्रह्म प्रमाणसिद्धसगुणभावम्। तदेव श्रुतिसिद्धस्वाभाविकजीवाभेदात् सुरनरतिर्यक्स्थावर-नारकिस्वर्ग्यपवर्गिचेतनैकस्वभावं स्वभावतो विलक्षणं च श्रुतिसिद्धस्वाभाविकभेदात्। श्रुतिसिद्धस्वाभाविकाभेदस्वीकारेण ब्रह्मणोऽचिदभिन्नतया ब्रह्मैव प्रकृतिविकारास्पदं स्वभावतो विलक्षणञ्च, अचिता तस्य स्वाभाविकभेदाङ्गीकारात्।

तत्र परस्य त्रिषु पक्षेषु प्रथमे शङ्करपक्षे श्रुत्यर्थपर्यालोचनपरभेदघटकसमानाधिकरणश्रुतिस्तत्पौर्वापर्यपर्यालोचनपरा, न केवलैकवाक्यमात्रतृप्ताः, भेदश्रुतिः द्वा सुपर्णा। 'क्षरावात्मानवीशते' इत्यादिः घटकश्रुतिः, यस्यात्मा शरीरमित्यादिः। समानाधिकरणश्रुतिः तत्त्वमसि, सर्वं खल्विदमित्यादिका। तत्पूर्वपरश्रुतिपौर्वापर्य-

अथ स्याद् उपक्रमेऽपि एकविज्ञानेन सर्वविज्ञानमुखेन कारणस्यैव सत्यतां प्रतिज्ञाय तस्य कारणभूतस्यैव ब्रह्मणः "सदेव सोम्येदमग्रमासीदेकमेवाद्वितीयम्" इति सजातीयविजातीयनिखिलभेदनिरसनेन निर्विशेषतैव प्रतिपादिता, एतच्छोधकानि प्रकरणान्तरवाक्यान्यपि । "सत्यं ज्ञानमनन्तं ब्रह्म निष्कलं निष्क्रियं निर्गुणं विज्ञानमानन्दम्"

---

पर्यालोचनम्, तत्र परायणाः श्रीयामुनाचार्याः । दुष्परिहारान् दुःखेन परिहर्यान्न, अपि तु दूषितपरिहारान् दोषान् वक्ष्यमाणानुदाहरन्ति । तथा हि तत्त्वमसीति वाक्ये तत्पदेन निर्विशेषचिन्मात्रं ब्रह्मोच्यते चेत्, तथासति यत्प्रकृतं प्रकरणप्राप्तं तदैक्षतेत्यादि श्रुतिसमधिगतः, जातविशिष्टं ब्रह्म तत्परामर्शी तच्छब्दः ।

तदवगतस्य ब्रह्मणः स्वसङ्कल्पकृतजगदुदयविभवलयादयः, आदिपदेनानुप्रवेशनामरूपव्याकरणादयो गृह्यन्ते, 'तदैक्षत बहु स्यां प्रजायेय' इति बहुभवनसङ्कल्पवत्त्वगुणः प्रोच्यते, सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः सर्वाः प्रजाः सन्मूलाः सद्ब्रह्मजन्याः सदायतनाः सति लीनाः सत्प्रतिष्ठिताः सुरक्षिताः सन्ति, तेन ब्रह्मणि जगदुत्पत्तिरक्षणलयकर्तृत्वधर्मा उक्ताः, इमे प्रकरणाधीतगुणाः, । सर्वशाखाप्रत्ययन्यायेन सर्वशाखाप्रतिपाद्योऽर्थ एक इति तात्पर्यकेण जगत्कारणतानिरूपणप्रसङ्गे शाखान्तराधीता गुणा अपि ब्रह्मण्येव बुध्यन्ते, तथा हि कारणवस्तुसम्बन्धितया प्रकरणान्तरोक्ता गुणाः । यः सर्वज्ञः सर्ववित् सर्वज्ञता 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यनेन सर्वशक्तित्वम् । "स ईशोऽस्य जगतो नित्यमेव" इति सर्वेश्वरत्वम् । "न तत्समश्चाभ्यधिकश्च दृश्यते" इति समाभ्यधिकनिवृत्तिः सत्यकामः सत्यसङ्कल्प इति सत्यसङ्कल्पत्वं सत्यकामत्वं च, "तस्य भासा सर्वमिदं विभाति" इत्यनेन सर्वविभासकत्वञ्च । इमे उक्तन्यायेन शाखान्तरीयप्रकरणान्तरीयाकृष्टगुणा अवधिशून्याः स्वापेक्षातिशयशून्याः संख्यादयो परिच्छिन्नाः, कल्याणगुणा आनन्दात्मकगुणा अपहतपाप्मा विजरोऽविमृत्युः इत्यादि वाक्यावगतनिरस्तनिखिलदोषता च तस्मिन् पक्षे, शङ्करमतीयतच्छब्दबोध्यनिर्विशेषचिन्मात्रपक्षे विहन्यन्ते । प्रकरणान्तरोक्ताः सृष्ट्युपयोगित्वेन आकृष्टाः सन्ति । समाभ्यधिकनिवृत्तावेककारणकत्वं जगतः सिद्ध्यति, सर्वविभासकत्वे सति जगत्स्थितिसिद्धिः । हेयप्रत्यनीकत्वमपि सृष्ट्युपयोगितयापेक्षितम् । अन्यथा हेयास्पदत्वे कर्मवश्यत्वापत्त्या स्वातन्त्र्यभङ्गः । ते सर्वे कारणबोधकतच्छब्दावगता विहन्यन्ते ज्ञापिता भवन्ति ।

उपक्रमेऽपीति । तत्त्वमसि वाक्योपक्रमस्य तदैक्षतेति वाक्यस्योपक्रमे 'येनाश्रुतं श्रुतमविज्ञातं विज्ञातम्' इत्यत्रापि एकविज्ञानेन सर्वविज्ञानमुखेन कारणस्यैव सत्यतां प्रतिज्ञाय ।

**इत्यादीनि सर्वविशेषप्रत्यनीकैकाकारणतां बोधयन्ति, न चैकाकारता-बोधनेऽपि पदानां पर्यायता, एकत्वेऽपि वस्तुनः सर्वविशेषप्रत्यनीका-कारत्वोपस्थापनेन सर्वपदानामर्थवत्त्वादिति ।**

**नैतदेवमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यस्याभावान्न सेत्स्यति, सत्यमिथ्यात्वयोरेकताप्रसक्तिर्वा, अपि त्वेक-विज्ञानेन सर्वविज्ञानप्रतिज्ञा सर्वस्य तदात्मकत्वेन सत्यत्वे सिद्ध्यति ।**

---

अयं भावः—यद्यपि तत्त्वमसीति वाक्यस्योपक्रमवाक्यं तदैक्षतेति, अत उपक्रमाधिकरणन्यायेन यथोपक्रमवाक्यमुत्तरम्, वाक्यार्थो बोध्य इत्यर्थकेन, तदैक्षतेति, उपक्रमवाक्येनेक्षणधर्मवत्वं बोध्यते। तेन तत्त्वमसीति वाक्ये तत्पदेन सगुणब्रह्मैकं परामर्शनीयम्, तथापि तदुपक्रमे येनाश्रुतं श्रुतमित्यत्र येन ज्ञातेन जगत्कारणेन सर्वं विज्ञातं स्यात्, अर्थात् कारणस्य ब्रह्ममात्रस्यैव सत्यत्वे विकारजातस्यासत्यत्व एकस्य कारणस्य ज्ञाने मिथ्यात्वाद्विकारजातं बाधितं भवति। कार्यस्य सत्यत्वे कारणाद्विलक्षणत्वे चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा न घटेत, इममेवार्थं मनसि कृत्याह—वाचारम्भणो विकारो नामधेयं मृत्तिकेत्येव सत्यम्, विकारो घटशरावादिर्वाचैवोच्यते, न वस्तुभूतो मृत्तिकैव सत्यम्। इत्थं तस्य ब्रह्मणः कारणभूतस्यैव सत्यतां पारमार्थिकतां विकारजातस्यासत्यतां मिथ्यात्वञ्च मृद्दृष्टान्तेन यथा वाचारम्भणो विकारो मृत्तिकेत्येव सत्यमित्याकारेण दर्शयित्वा सत्यभूतस्यैव ब्रह्मणो दार्ष्टान्तिकस्य सदेव सोम्येदमग्र आसीद् एकमेवाद्वितीयमिति हे सोम्य ! सोमयागार्ह ! इदं परिदृश्यमानं जगद् अग्रे सृष्टेः पूर्वं सदेव सद्रूपं ब्रह्मैवासीत्। एकमेवाद्वितीयम्—सजातीयभेदशून्यं स्वसदृशशून्यं विजातीयभेदशून्यं ब्रह्मातिरिक्तं मिथ्येति विजातीयभेदशून्यं स्वगतभेदशून्यं स्वनिष्ठगुणाभावान्निर्गुणमिति यावत् स्वनिष्ठगुणसत्त्वे गुणभेदः स्वरूपे स्यात्, स नास्तीति भावः। इत्थं सजातीयविजातीयस्वगतभेदनिरसनेन निर्विशेषतैव प्रतिपादिता।

कारणतया निर्णीतस्यैव ब्रह्मणः कारणत्वाशङ्कितदोषनिरासाय प्रकरणान्तरगतशोधकवाक्यान्यपि "सत्यं ज्ञानमनन्तं ब्रह्म निष्कलं निष्क्रियं निर्गुणं विज्ञानमानन्दम्" इत्यादीनि सर्वविशेषा अनृतत्व-जडत्व-देशकाल-वस्तु-परिच्छेदरूपास्तत्प्रत्यनीकतद्व्यावृत्तिरूपैकाकारतामथ विशेषाः कला अनवयवाः क्रिया गुणा जडत्वादीनि दुःखानि तद्व्यावृत्तिरूपैकाकारताञ्च प्रतिपादयन्ति। तद्व्यावृत्तयो धर्मा ब्रह्मणि सन्तीति न वाच्यम्, व्यावृत्तेरभावस्याधिकरणस्वरूपतया धर्मत्वसंशयाभावात्। न च सत्यादिपदानामेकार्थबोधकत्वेन पर्यायतापत्तिरिति सर्वपदोच्चारणं व्यर्थमिति वाच्यम्, तेषां जडादिव्यावृत्तिविभिन्नरूपैर्ब्रह्मस्वरूपप्रतिपादकत्वेन एकरूपेणैकबोधकत्वरूपपर्यायत्वाप्रसक्तेः, इत्याह—न चेत्यादि सर्वपदानामर्थवत्त्वादित्यन्तेन ग्रन्थेन।

**अयमर्थः, श्वेतकेतुम्प्रत्याह—**

**स्तब्धोऽस्युत तमादेशमप्राक्ष्य इति परिपूर्ण इव लक्ष्यसे, तानाचार्यान् प्रति तमादेशं पृष्टवानसीत्यादेशः प्रशासनम्, "एतस्य वाऽक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिभिरैकार्थ्यात् । तथा च "मानवं वचः प्रशासितारं सर्वेषाम्" इत्यादि । अत्राप्येकमेवेति जगदुपादानतांप्रतिपाद्य द्वितीयपदेनाधिष्ठात्रन्तरनिवारणादस्यैवाधिष्ठातृत्वमपि**

---

एवमेतदेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमेवं ब्रह्मनिर्विशेषज्ञानेन सर्वस्य मिथ्यात्वेन ज्ञानं यदुक्तम्, तत्रैकविज्ञानसर्वविज्ञानयोरेकत्वे सर्वस्याभावे सर्वज्ञानस्य सर्वाभावज्ञानमित्यर्थः स्यात्, तन्नोचितम्, सर्वशब्दस्य सर्वाभाववाचित्वाभावात्, ज्ञातव्यस्य सर्वस्याभावेन सर्वविज्ञानप्रतिज्ञाभङ्गापत्तेश्च । एकेन सर्वस्य तादात्म्यपक्षे ब्रह्मजगतोरभेदेन सत्यमिथ्यात्मनोरैक्याद् ब्रह्मणि हेयगुणापातप्रसङ्गेनाद्वैतवादे सिद्धान्तविरोधापत्तेः । 'सर्वं मिथ्यात्वेन ज्ञातं भवति' इति व्याख्याने मिथ्यात्वाध्याहारप्रसङ्गः, एकसत्यज्ञानेन सर्वमिथ्यात्वज्ञानमिति वैरूप्यप्रसङ्गश्च । तस्मादेकसत्यत्वज्ञानेन तदात्मकत्वेन सर्वस्थूलचिदचिद्विशिष्टब्रह्मरूपं जगत् सत्यत्वेन ज्ञातं भवतीति श्रुत्युक्तैकविज्ञानेन सर्वप्रतिज्ञातात्पर्यार्थः । अयमेवार्थो नैतदेवमित्यादि सत्यत्वे सिद्ध्यतीत्यन्त्येनोच्यते ।

तदैक्षतेत्यादि वाक्यमुपक्रमरूपं जगतो ब्रह्मात्मकत्वेन सत्यत्वानुगुणमपि तत्त्वमसि, एकमेवाद्वितीयम्, मृत्तिकेत्येव सत्यमिति महावाक्यं न सत्यत्वानुगुणम्, अपि तु मिथ्यात्वानुगुणमित्याशङ्कायामेकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यप्रदर्शनपूर्वकं समादधाति - **अयमर्थ** इत्यादि। येनाश्रुतमित्यादि प्रतिज्ञावाक्योपक्रमवाक्यम्, श्वेतकेतुं पुत्रं प्रति उद्दालकस्य पितुः प्रश्नवाक्यम्—"स्तब्धोऽस्युत तमादेशमप्राक्ष्यः" इति ।

गुरुकुलादधीतवेद आगतः परिपूर्ण इव लक्ष्यसे स्तब्धोऽसीत्यस्यार्थः । तमादेशमप्राक्ष्यः, तम् येनाश्रुतमित्यादि वाक्यघटकयत्पदोपात्तम्, आदेशः प्रशासनं प्रवृत्तिपर्यवसायिचराचरबोधनं तत्करणान्तरानपेक्षसाधकतमत्वेन विवक्षितं कर्तृभूतम्, अप्राक्ष्यः पृष्टवानसि श्वेतकेतो । तेन जगतः प्रशासने करणान्तरानपेक्षः कर्ता प्रश्नविषयः सिद्ध्यति, "अकर्तरि च कारके संज्ञायाम्" इति घञपि । कर्मणि प्रत्ययः पराभिमतस्तु न, उपदेशकर्मेत्यर्थे प्रत्ययार्थस्वारस्यभङ्गापत्तेः । अत्र ब्रह्मणः प्रशासनकर्तृत्वे श्रुतिस्मृतिसद्विद्याप्रकरणश्रुतिवचनानि प्रमाणम्, तथा हि—एतस्य वाक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ तिष्ठतः, स्मृतिर्मानवी प्रशासितारं सर्वेषामित्यादिः । अत्रापि अस्मिन् सद्विद्याप्रकरणेऽपि, एकमेवाद्वितीयमित्यत्रैकमेवेति ब्रह्मणो जगदुपादानतां सूक्ष्मचिदचिद्विशिष्टब्रह्मस्थूलचिदचिद्विशिष्टकार्यब्रह्मणोरेकत्वेन जगतः कारणावस्थापन्नतां बोधयित्वाऽद्वितीयपदेन सजातीयद्वितीयरहितार्थकेनाधिष्ठात्रन्तर-

**प्रतिपाद्यते, अतस्तं प्रशासितारं जगदुपादानभूतमपि पृष्टवानसि, येन श्रुतेन मतेन विज्ञातेनाश्रुतम्मतमविज्ञातं श्रुतं मतं विज्ञातं भवति, इत्युक्तं स्यात्। निखिलजगदुदयविभवविलयादिकारणभूतं सर्वज्ञत्वसत्यकामत्वसत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरं किं ब्रह्म त्वया श्रुतम्।**

**तस्य निखिलकारणतया कारणमेव नानासंस्थानविशेषसंस्थितं कार्यमित्युच्यत इति कारणभूतसूक्ष्मचिदचिद्वस्तुशारीरकब्रह्मविज्ञानेन कार्यभूतमखिलञ्जगद् विज्ञातं भवतीति हृदि निधाय येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं स्यादिति पुत्रं प्रति पृष्टवान् पिता, तदेतत्सकलस्य वस्तुजातस्यैककारणत्वं पितृहृदि निहितमजानन् पुत्रः परस्परविलक्षणेषु वस्तुष्वन्यस्य विज्ञानेन तदन्यविज्ञानस्याघटमानतां बुद्ध्वा परिचोदयति। कथन्नु**

---

निवारणादस्यैवोपादानत्वेन निर्णीतस्यैवाधिष्ठातृत्वं प्रशासनकर्तृत्वरूपं प्रतिपाद्यते, तेनोद्दालकस्य प्रश्नविषयः प्रशासनधर्मवान्। अतो जगदुपादानभूतं प्रशासितारमपि पृष्टवानसि, पूर्वमाचार्यान् पृष्टवानसीति ग्रन्थेन न वै नूनं भगवन्तस्त एतदवेदिषुरित्यादि श्वेतकेतूक्ततच्छब्दस्मारिता आचार्याः। अथ तं देशमित्यत्र तच्छब्दो विवरणेन यच्छब्दोक्तार्थपरो बोध्य इति तमादेशमित्यादेर्येनाश्रुतमित्यादिनैकवाक्यतां करोति।

येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं स्यादिति। नहि ब्रह्मणा स्वरूपतः सर्वं ज्ञातं स्यादिति येनेत्यस्य श्रुतेन मतेन विज्ञातेनेति क्रमेणार्थो बोध्यः, येन श्रुतेन गुरुमुखाच्छाब्दबोधविषयीकृतेन जगदुपादाननिमित्तरूपेण ब्रह्मणा सर्वं जगद् ब्रह्मात्मकमिति शाब्दबोधविषयो भवति, येन मतेन मीमांसया विचार्य निर्णीतेन सर्वं ब्रह्मात्मकं सत्यमिति निर्णीतं भवति। येन निमित्तोपादानतया ध्यातेन सर्वं ब्रह्मात्मकमिति ध्यातम्भवति, तं जगत् प्रशासितारं निमित्तकारणम्, उपादानञ्च पृष्टवानसि, इति एकवाक्यतालब्धार्थः मूले इत्युक्तं स्यादिति ग्रन्थेनोच्यते। यद्यपि येनेत्यनेनोपादानकारणत्वं न कण्ठत उक्तं तथा ज्ञातत्वमपि, तथापि मृद्दृष्टान्तसामर्थ्याद् उपादानत्वं ज्ञातञ्च यच्छब्दतात्पर्यविषयौ बोध्यौ, उपादानविषयप्रश्ने तात्पर्यञ्च। 'यतो वा इमानि भूतानि' इति श्रुत्यन्तरप्रोक्तकारणत्वयोगात् परमात्मनः कारणत्वे पृष्टे उपादानत्वे सर्वशक्तित्वं पृष्टम्, निमित्तत्वे पृष्टे सर्वज्ञत्वम्, जगत्सृष्टिज्ञाने लीलारूपताज्ञाने सत्यकामत्वगुणः पृष्टो भवति, इति यथाप्रश्नमुत्तरे ब्रह्मणि गुणवत्ताऽर्थतोऽवगम्यत इति पितुरभिप्रायो हार्दो भाव इत्यन्तग्रन्थेनोच्यते।

भगवतः स आदेश इति परिचोदयति। पुनस्तदेव हृदि निहितं ज्ञानानन्दामलत्वैकस्वरूपमपरिच्छेद्यमाहात्म्यं सत्यसङ्कल्पत्वमिश्रैरनवधिकातिशयासंख्येयकल्याणगुणगणैर्जुष्टमविकारस्वरूपं परं ब्रह्मैव नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरं स्वलीलायै स्वसङ्कल्पेनानन्तविचित्रस्थिरमसरूपं जगत् संस्थानस्वांशेनावस्थितमिति तज्ज्ञानेनान्यस्य निखिलस्य ज्ञाततां ब्रुवन् लोकदृष्टं कार्यकारणयोरनन्यत्वं दर्शयितुं दृष्टान्तमाह—यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति एकमेव मृद्द्रव्यं स्वैकदेशेन नानाव्यवहारास्पदत्वाय घटशरावादिनानासंस्थानावस्थारूपविकारास्पदं नाना-

---

कारणात्कार्यस्य भिन्नत्वादभिन्नत्वे कारणे, हेयधर्माणां प्रसङ्गेन कर्मवश्यत्वापत्तेः, कार्यजातस्य विचित्रस्य विभिन्नसंस्थानैरवस्थितस्यैककारणकत्वानुपपत्तेश्च। 'एकविज्ञानेन सर्वविज्ञानं न घटते' इति श्वेतकेतोः शङ्कामपाकरिष्यत उद्दालकस्य हृदि निहितं प्रश्नविषयकसर्वविज्ञानप्रतिज्ञातात्पर्यं प्रकाशयति भगवान् भाष्यकारः। तस्येत्यादिना—तस्य ब्रह्मणो निखिलजगत्कारणतया कारणमेव नानासंस्थानविशेषसंस्थितं कार्यमुच्यत इति कारणभूतं निखिलजगदुपादाननिमित्तभूतं सूक्ष्मचिदचिद्वस्तुशरीरं नामरूपविभागार्हचेतनाचेतनशरीरं यद्ब्रह्म तद्विज्ञानेन, कार्यभूतं नामरूपविभागार्हचेतनाचेतनशरीरांशेनावस्थितं ब्रह्मज्ञातं भवतीति हृदि निधाय "येनाश्रुतं श्रुतं भवत्यमतं मतम्" इत्यादि श्वेतकेतुं पृष्टवान् पितोद्दालकः "उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच' इति साधितश्वेतकेतुनिरूपितपितृभाव उद्दालकः। तदेतत् सकलस्य जगतो विभिन्नसंस्थानेन स्थितस्यैककारणकत्वं पितृहृदि निहितमजानन् उपपत्त्यज्ञानेन सन्दिहानोऽर्थात् परस्परविलक्षणेषु चराचरेषु वस्तुषु पदार्थेषु सत्येषु कार्यवैलक्षण्येन कल्पितविभिन्नकारणकेषु अन्यस्यैकस्य कस्यचिज्ज्ञानेन तदन्यविज्ञानस्याघटमानतामनुपपन्नतां बुद्ध्वा परिचोदयति। अर्थाद् उपपत्तिं पृच्छति—"कथन्नु भगवः स आदेशः" इति सकलजगत्प्रशासनकर्ता कथम्—केन प्रकारेण विशिष्टो येन ज्ञातेन सर्वं ज्ञातं भवति। पिता ब्रह्मणो जगत्कारणत्वं सकलजगत्कारणतायामपेक्षिताः सर्वज्ञत्व-सर्वशक्तित्व-सत्यसङ्कल्पादयो गुणास्तेषां जातं गुणञ्च विवक्षन् उपादानत्वे कार्यगतहेयगुणाश्रयत्वशङ्कां निमित्तकारणत्वे कुलालवदपूर्णत्वाशङ्कां चापाचिकीर्षुः कारणज्ञानेन कार्यज्ञानं लोकसिद्धं दर्शयति। परिचोदितः—उक्तार्थोपपत्तिं पृष्टः पिता हृदि निहितं बुद्धिविषयीकृतं ज्ञानानन्दामलत्वस्वरूपं ज्ञानत्वमानन्दत्वञ्च धर्मिस्वरूपनिरूपकधर्माश्च ज्ञानादयो यत्र सन्ति। इमे धर्मा विज्ञानमानन्दं ब्रह्मेति शोधकवाक्यसिद्धाः। अपरिच्छिन्नमाहात्म्यमिति देशकालपरिच्छेदरहितमस्मिन्देश एवास्ति, अस्मिन् काल एवास्ति, इति प्रतीतिविषयताशून्यम्। इदमनन्तमिति

नामधेयमपि मृत्तिकासंस्थानविशेषत्वाद् मृद्द्रव्यमेवेत्थमवस्थितम्, न वस्त्वन्तरमिति, यथा मृत्पिण्डविज्ञानेन तत्संस्थानविशेषरूपं घटशरावादि सर्वं ज्ञातमेव भवतीत्यर्थः।

ततः कृत्स्नस्य जगतो ब्रह्मैककारणतामजानन् पुत्रः पृच्छति "भगवँस्त्वमेतद् ब्रवीतु" इति। ततः सर्वज्ञं सर्वशक्तिब्रह्मैव सर्वकारणमित्युपदिशन् स होवाच—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति। अत्रेदमिति जगन्निर्दिष्टम्, अग्र इति च सृष्टेः पूर्वकालस्तस्मिन् काले जगतः सदात्मकतां सदेवेति प्रतिपाद्य तत्प्रतिपादनेनैव तत्सृष्टिकालेऽप्यविशिष्टमिति

---

शोधकवाक्यपदसिद्धं सत्यसङ्कल्पमिश्रैरित्यादिना गुणतोऽपि परिच्छेदशून्यं तत्रास्तीति वोध्यम्। सत्यसङ्कल्पोऽवाधितार्थविषयः, इदमहं करिष्यामि बहु स्यामिति ईक्षारूपो यत्र, तेन सृष्टावायासनिवृत्तिरुक्ता अवधिशून्या स्वापेक्षा अतिशयशून्याः संख्यापरिच्छेदशून्याः कल्याणगुणास्तैर्जुष्टं सेवितमविकारस्वरूपं निर्विकारमिति शोधकवाक्यपदसिद्धमेवम्भूतं ब्रह्मैव नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरं देवमनुष्यादिनामतदाकृतिविभागायोग्यचेतनादिशरीरकम्। स्वलीलायै नोपभोगाय परिपूर्णत्वात् स्वसंकल्पेन इच्छामात्रेण नायासेन अनन्तमियत्तारहितं विचित्रं विभिन्नाकारं स्थिरं स्थावरं जङ्गमं तत्स्वरूपं जगत्, तस्य संस्थानानि आकृतयस्ता एव स्वांशभूतास्तेनावस्थितं तेन नोपादानत्वकृतदोषश्लेषस्तज्ज्ञानेनान्यस्य जगतः स्थूलचिदचिदात्मकप्रपञ्चस्य ज्ञाततां ब्रह्मात्मकत्वेन ज्ञानविषयतां ब्रुवन् वक्तुं लोकदृष्टं कार्यकारणयोरनन्यत्वमुभयोरेकत्वं दर्शयितुं दृष्टान्तमाह—"यथा सोम्यैकेनेत्यादि सत्यमित्यन्तग्रन्थेन"। एकमेव मृद्द्रव्यं स्वैकदेशेन स्वकीयावयवविशेषैर्वाचा वाक्पूर्वव्यवहाराय नानाव्यवहारास्पदत्वाय घटशरावादिनानासंस्थानावस्थारूपविकारापन्नं भिन्नभिन्नाकृतिसम्पन्नं विभिन्नसंस्थानावस्थापत्तिरेव विकारः। नामधेयं नानानामधेयमपि मृत्तिकासंस्थानविशेषत्वाद् मृद्द्रव्यमेवेत्थमवस्थितं मृत्संस्थानविशेषः मृदवयवसन्निवेशः शरावादिषु अनुगः तिष्ठतीति मृदेव न वस्त्वन्तरम्, यथा मृत्पिण्डविज्ञानेन तत्संस्थानविशेषरूपं घटशरावादि विज्ञातं भवतीत्यर्थः।

कार्यस्य कारणात्मकत्वेऽपि जगतो विविधकार्यवैचित्र्येण कारणभेद इति जगदेककारणत्वमिति संशयानः श्वेतकेतुः पितरं पृच्छति, इत्याह मूले पृच्छत्यन्तेन। प्रश्नमाह "भगवँस्त्वमेव तद् ब्रह्म, भगवन् भवानेवस्पष्टं बोधयतु"। ततःप्रश्नोत्तरसर्वज्ञं विशेषरूपेण सकलप्रमेयाभिज्ञं सर्वशक्तिकार्यानुकूलानन्तोत्कृष्टधर्मवत्, "यः सर्वज्ञः स सर्ववित्, परास्य शक्तिर्विविधैव श्रूयते" इति श्रुतिसिद्धं ब्रह्मैव सर्वकारणमिति उपदिशन् शब्देन बोधयिष्यन् स होवाच—"सदेव सोम्येदमग्रमासीदेकमेवाद्वितीयमिति"। अत्रेदमिति जगन्निर्दिष्टं

**कृत्वा एकमेवेति सदापन्नस्य जगतः तदानीमविभक्तनामरूपतां प्रतिपाद्य तत्प्रतिपादनेनैव सतो जगदुपादानत्वं प्रतिपादितं स्वव्यतिरिक्तनिमित्तकारणमद्वितीयपदेन प्रतिषिद्धमिति तमादेशमप्राक्ष्यः—"येनाश्रुतं श्रुतं भवतीति आदावेव प्रशासितैव जगदुपादानमिति हृदि निहितमिदानीं सुव्यक्तम्" ।**

**एतदेवोपपादयति—स्वयमेव जगदुपादानं निमित्तञ्च सत् तदैक्षत बहु स्यां प्रजायेयेति, तदेतच्छब्दवाच्यं परं ब्रह्मैव सर्वज्ञं सर्वशक्तिसत्यसङ्कल्पमवाप्तसमस्तकाममपि लीलार्थं विचित्रानन्तचिदचिन्मिश्रजगद्रूपेणा-**

---

प्रत्यक्षविषयत्वात् प्रकृतस्य प्रकरणप्राप्तस्य कस्यचिदन्यस्याभावात् । तदैक्षतेत्यादि श्रुतिभि प्रतिपादयिष्यमाणत्वात् सृष्टेः पूर्वं हे सोम्य ! सोमयागार्ह ! सदेव प्रमाणसम्बन्धार्हत्वेन प्रवृत्तिनिमित्तेन विशिष्टं प्रकृतिकालादिविशिष्टं ब्रह्मैवासीत् कालप्रकृतिस्वांशेन ब्रह्मात्मकमिति यावद् न ब्रह्मात्मकप्रकृतिकालातिरिक्तं वैशेषिकारम्भवत् जगत् सदसच्च सदेवेत्येवकारेणोच्यते । एवं जगतः सदात्मकतां सदेवेति शब्देन प्रतिपाद्य सृष्टेः पूर्वं जगतो दृश्यमानस्य चिदचित्प्रपञ्चस्य सदात्मकतां ब्रह्मात्मकतां प्रतिपाद्य निरूप्य सृष्टिकालेऽपि नामरूपविभागार्हतायामपि तज्जगद्विशिष्टं ब्रह्मात्मकमिति एकमेवेतिशब्देन बोध्यते । सृष्टिप्रलययोर्भेदस्तु चिदचितोर्नित्यत्वेऽपि नामरूपविभागार्हानर्हत्वकृतः ब्रह्मणः प्रकृतिकालांशेन प्रलयावस्थायां भाव्यवस्थातः नामरूपविभागरूपावस्थातः प्रागवस्थायोगित्वं नामरूपाविभागमवस्थान्तरयोगित्वम् उपादानत्वमित्यर्थः । विशेष्यांशे उपादानत्वञ्च प्रलयकालिकावस्थान्तरयोगिप्रकृतिकालयोगित्वरूपं तत्प्रतिपादनेनैव ब्रह्मात्मकत्वप्रतिपादनेनैव सतो ब्रह्मणो जगदुपादनत्वं निरुक्तरूपं प्रतिपादितं ब्रह्मसजातीयस्यान्यस्य मृदुपादानान्यकुलालस्यैव सत्त्वे सदुपादानत्वेऽपि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा न घटेत, अतः स्वव्यतिरिक्तनिमित्तकारणमद्वितीयपदेन प्रतिषिद्धमिति तमादेशमप्राक्ष्यः—"येनाश्रुतं श्रुतं भवति" । आदावेव श्वेतकेतुं प्रति प्रश्नवेलायामेव प्रशासितैव आदेशपदप्रतिपाद्य एव जगदुपादानमिति हृदि निहितम्, उद्दालकमनो वर्तमानमिदानीमद्वितीयपदेनोपादानातिरिक्तस्य निमित्तकारणत्वनिषेधसमये सुव्यक्तम्, संशयविपर्ययासहिष्णुज्ञानविषयतामुपगतम् ।

**एतदेवोपपादयतीति** । सद् विद्या श्रुत्यां सच्छब्दवाच्यं जगदुपादाननिमित्तोभयरूपं ब्रह्मैव, न सजातीयविजातीयस्वगतभेदशून्यं ब्रह्मेति वाचोयुक्त्या साधयति । स्वयमेव सच्छब्दवाच्यमेवोक्तम् । जगदुपादानं निमित्तकारणं च तदैक्षत बहु स्यां प्रजायेयेति । उपरोक्तश्रुतिघटकं तच्छब्दं वाच्यं परं ब्रह्मैव निमित्तकारणत्वात् प्रेरकत्वात् सर्वज्ञम् । सर्वशक्त्युपादानकारणत्वात् सत्यसङ्कल्पमनायासेन सृष्टिकरत्वात् । अवाप्तसमस्तकामं लीलायै सृष्टिकरत्वात् । एवम्भूतमपि विचित्रचिदचिन्मिश्रं जगद्रूपेण,

हमेव बहु स्याम, तदर्थं प्रजायेयेति स्वयमेव सङ्कल्प्य स्वांशैकदेशादेव वियदादि भूतानि सृष्ट्वा पुनरपि सैव सच्छब्दाभिहिता परादेवतैवैक्षत हन्ताहमिमांस्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति। अनेन जीवेन जीवस्य ब्रह्मात्मकत्वं प्रतिपाद्य ब्रह्मात्मकजीवानुप्रवेशादेव कृत्स्नस्याचिद्वस्तुपदार्थत्वम्, एवम्भूतस्यैव सर्वस्य वस्तुनो नामरूपभाक्त्वमिति च दर्शयति।

---

विविधावताररूपेण च। अहमेव बहु स्याम, तदर्थं प्रजायेय परिणामोऽयम्। 'बहु स्याम' इति उत्पन्नावस्था, 'प्रजायेय' इति उत्पद्यमानावस्था च बोध्यते। यद्यपि उत्पद्यमानावस्थायाः जायते शब्दप्रतिपाद्यायाः अस्तिशब्दप्रतिपाद्योत्पन्नावस्थातः प्राग्भावित्वेन कारणत्वमिति प्राग्वाच्यम्, तथापि सङ्कल्पे विलोमस्यैव विदितत्वेन श्रुतौ तथोक्तम्।

स्वयं सङ्कल्प्य स्वांशैकदेशादेव प्रकृतिभागादेव वियदादिभूतानि श्रुत्यन्तरानुगुण्येन तदुपलक्षितमहदादीन् च सृष्ट्वा प्रकृत्यादिपृथिव्यन्तचतुर्विंशतितत्त्वेषु प्रत्येकं स्वात्मकजीवानुप्रवेशेन तत्तत् तत्त्वरूपतां धृत्वा पुनरपि व्यष्टिसृष्टिकरणार्थं सङ्कल्पान्तरं करोति। तथा हि सैव सच्छब्दाभिहिता परादेवता एवमैक्षत। स्वात्मकजीवानुप्रवेशेन तेजोऽबन्नोपलक्षितमहदादिरूपतामुपगता निमित्तोपादानभूता परादेवता सा ऐक्षत। "हन्ताहमिमाः तिस्रो देवताः" अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि। तेजोऽबन्नोपलक्षितमहदादिसृष्टिकर्त्ताऽहं सृष्टेः पूर्वं स्वरचिततेजोऽबन्नाद्युपलक्षितमहदादिषु स्वात्मकजीवानुप्रवेशेन नामरूपे महदादीनां व्याकरणकानि। तेजोऽबन्नानां देवतात्वं परत्वं च देवानुप्रवेशाश्रयेण स्वस्वावस्थोपलब्धेः, "तेजः परस्यां देवतायाम्" इति श्रुतेः। 'अनुप्रविश्य व्याकरवाणि' इत्यनेन पृथक्सिद्धकुलालकृतघटनामरूपव्याकरणमिव व्याकरणं निषिध्यते; अपि तु "स्वघटितमहदादिनामरूपव्याकरणमभिप्रेतम्" इत्यादि भाष्यकारः स्फुटीकरोति। अनेन जीवेनात्मनेति जीवस्य ब्रह्मात्मकत्वं प्रतिपाद्य जीवेनात्मना जीवशरीरकेनात्मना परमात्मना अनुप्रविश्य तेन समष्टिसृष्टौ महदादिक्षित्यन्तानां स्वस्वशारीरकब्रह्मपर्यन्तं व्याकरणम्। तथा व्यष्टिसृष्टौ देवमनुष्यमृगसरीसृपादि जङ्गमघटादिस्थावराणां स्वस्वशारीरकब्रह्मपर्यन्तं व्याकरणम्, इति ब्रह्मात्मकजीवानुप्रवेशेनेति निष्कृष्टार्थ इत्याह—ब्रह्मात्मकजीवानुप्रवेशादेव कृत्स्नस्य पदार्थत्वम्, पदजन्योपस्थितीयमुख्यविशेष्यताश्रयत्वम्। घटादिशब्दैः घटादिजीवशारीरकब्रह्मोपस्थित्या ब्रह्मण एव मुख्यविशेष्यतया प्रतीतेः। सर्वत्र एवम्भूतस्यैव घटादिशारीरकब्रह्मरूपतामवाप्यैव सर्वस्य घटादेर्वस्तुनः नामरूपभाक्त्वम्। घटादीनां वाच्यत्वं घटाद्याकृतिमत्त्वं च, इति च दर्शयति नामरूपव्याकरणश्रुतिः।

एतदुक्तं भवति। जीवात्मा ब्रह्मणः शरीरतया प्रकरत्वाद् ब्रह्मात्मकः, यस्यात्मा शरीरमिति श्रुत्यन्तरात्। एवम्भूतस्य जीवस्य शरीरतया प्रकारभूतानि देवमनुष्यादिसंस्थानानि वस्तूनीति ब्रह्मात्मकानि, तानि सर्वाणि। अतो देवो मनुष्यो यक्षो राक्षसः पशुः मृगः पक्षी वृक्षो लता काष्ठं शिला तृणं घटः पट इत्यादयः सर्वे प्रकृतिप्रत्ययययोगेनाभिधायकतया प्रसिद्धाः शब्दा लोके तत्तद्वाच्यतया प्रतीयमानतत्तत्संस्थानमुखेन तदभिमानिजीवतदन्तर्यामिपरमात्मपर्यन्तस्य संघातस्य वाचकाः। एवं समस्तचिदचिदात्मकप्रपञ्चस्य सदुपादानता सन्निमित्तता सदाधारता सन्नियम्यता सच्छेषतादि सर्वं च "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा" इत्यादिना विस्तरेण प्रतिपाद्य कार्यकारणभावादिमुखेनैतदात्म्यमिदं सर्वं तत् सत्यमिति कृत्स्नस्य जगतः स

---

स्वरूपैक्येऽपि ब्रह्म जगतो स्वरूपत ऐक्येऽपि मृद्घटाद्योः स्वरूपैक्ये मृदात्मको घट इति व्यवहारवद् जगतो ब्रह्मात्मकत्वं सम्भवति। किं शरीरशरीरिभावकृतब्रह्मात्मकत्वेन? शब्दानां ब्रह्मपर्यन्ताभिधायित्वे परमात्मनि देवमनुष्यत्वयोर्बाधेन विभक्त्यर्थस्य देवमनुष्यावित्यत्र द्वित्वस्यानन्वयापत्तिः। अत आह—एतदुक्तं भवतीति। जीवात्मा तु परब्रह्मणः शरीरतया प्रकरात्वाद् ब्रह्मात्मकः। यो यस्य शरीरतया प्रकारः, स तदात्मकः। यथा देवादिदेहो जीवात्मकः। दण्डो हि दण्डिनो न शरीरतया प्रकार इति न दण्ड्यात्मको व्यपदिश्यते। जीवस्य ब्रह्मशरीरत्वे प्रमाणम्—"यस्यात्मा शरीरं यस्य पृथिवी शरीरम्" इति श्रुतिः। तस्माद् जीवस्य ब्रह्मात्मकत्वं शरीरशरीरिभावकृतमेव। जीवशरीरतया प्रकारभूतानि देवादिसंस्थानानि वस्तूनि पदार्थरूपाणि, तत्त्वं च ब्रह्मात्मकत्वेन इति तान्यपि सर्वाणि ब्रह्मात्मकानि।

जीवाचेतनयोः शरीरतया शरीरवाचकशब्दानां शरीरिपर्यन्ताभिधायित्वमिति न्यायेन जीवविशेषः पुण्यविशेषाद्देवो जातः, पापविशेषात् पशुर्जात इति साक्षिकेन देवो मनुष्यो यक्षो राक्षस इत्यादयः, सर्वे प्रकृतिवादिप्रत्ययाजादियोगेनाभिधायकतया प्रसिद्धाः शब्दाः देवकर्तृत्वाद्यवच्छिन्नरूढयर्थतावच्छेदकदेवत्वादिसंस्थानविशेषावयवसन्निवेशविशेषावच्छिन्नाभिधायकतया प्रसिद्धाः शब्दाः तत्तद्वाच्यतया तत्तत्संस्थानद्वारा तदभिमानि जीवं तदन्तर्यामि परमात्मपर्यन्तसङ्घातस्य वाचका इति देवमनुष्यावित्यत्र देवमनुष्यत्वयोर्द्वित्वस्य च साक्षात् परमात्मनि अनन्वयेऽपि जीवरूपशरीरभेदेन तद्द्वारा अन्वयसौलभ्यात्। काठिन्यवान् यो बिभर्त्ति इतिवत् त्रिवृत्करणवाक्यानां प्रस्तुतार्थानपेक्षत्वेन तानि विहाय उपस्थितवाक्यार्थं सङ्ग्रहेण वदति एवमित्यादिना।

एवात्मा कृत्स्नं जगत् तस्य शरीरम् । तस्मात् त्वं शब्दवाच्यमपि जीवप्रकारं ब्रह्मैवेति सर्वस्य ब्रह्मात्मकत्वं प्रतिज्ञातम् । 'तत्त्वमसि' इति जीवविशेष उपसंहृतम् ।

एतदुक्तं भवति, ऐतदात्म्यमिदं सर्वमिति चेतनाचेतनप्रपञ्चमिदं सर्वमिति निर्दिश्य तस्य प्रपञ्चस्यैष आत्मेति प्रतिपादितः, प्रपञ्चोद्देश्येन ब्रह्मात्मकत्वं प्रतिपादितमित्यर्थः । तदिदं ब्रह्मात्मकत्वं किमात्मशरीरभावेन, उत स्वरूपेणेति विवेचनीयम् । स्वरूपेणेति चेत्, ब्रह्मणः सत्यसङ्कल्पत्वादयः । "तदैक्षत बहु स्यां प्रजायेय" इति उपक्रमावगता बाधिता भवन्ति। शरीरात्मभावेन च तदात्मकत्वं श्रुत्यन्तराद् विशेषतोऽवगतम् ।

---

समस्तस्य चिदचिदात्मकप्रपञ्चस्य सतो जायमानत्वेन सदुपादानता, सन्निमित्तता, सदाधारता, सदाधेयता, सन्नियम्यता, सच्छेषतादि सर्वं च सन्मूलाः सन्निमित्तोपादानकाः ।

हे सोम्य ! सोमार्ह ! इमाः दृश्यमानाः सर्वाः प्रजाः सचेतनाः, न अचिताः, स्थावरेष्वपि तदीयाभिमानिजीवस्य सत्त्वात् । अन्यथा पदार्थत्वन्न स्यात् । सदायतनाः, सदाधाराः, सन्नियम्याः, सच्छेषभूताः, सत्प्रतिष्ठाः सति लीनत्वात् तत्प्रतिष्ठिता इत्यादिना विस्तरेण प्रतिपाद्य कार्यकारणभावादिमुखेन ऐतदात्म्यमिदं सर्वं तत्सत्यमिति कृत्स्नस्य जगत एष चासावात्मा एतदात्मा, स एव ऐतदात्म्यं सर्वम् । अनेनात्मप्रपञ्चयोः कार्यकारणभावसम्बन्ध उक्तः । प्रपञ्चस्य आत्मा अस्तीति शरीरशरीरिभावसम्बन्ध उक्तः । तस्मात् त्वंशब्दवाच्यमपि जीवप्रकारं ब्रह्मैवेति सर्वस्य ब्रह्मात्मकत्वं प्रतिज्ञातम्, 'तत्त्वमसि' इति वाक्य उपसंहृतम्। ऐतदात्म्यमिदमिति वाक्ये सर्वस्य ब्रह्मात्मकत्वं यदुक्तम्, तज्जीवे सर्वविशेष उपसंहृत्य विशेषतः प्रदर्श्य स्थापितम् ।

'मृदात्मको घटः' इत्यत्र यथाऽऽत्मशब्दः स्वरूपपरस्तथा ऐतदात्म्यमिदं सर्वमित्यत्रात्मशब्दः स्वरूपपर इति । उक्तश्रुतेः प्रपञ्चस्य ब्रह्मस्वरूपत्वं 'तत्त्वमसि' इति जीवस्य ब्रह्मस्वरूपत्वमभिदधाति । सन्देहोपस्थितौ 'एतदुक्तं भवति' इत्यादिना सन्देहमपाकरोति—सर्वशब्दस्येदं सर्वमसृजतेत्यत्र चेतनाचेतनप्रपञ्चपरतया निर्णीतत्वे नैतदात्म्यमिदं सर्वमित्यत्र सर्वपदेन प्रमाणान्तरगम्यचेतनाचेतनप्रपञ्चमुद्दिश्य ब्रह्मात्मकत्वं विधीयत इत्याह—ऐतदात्म्यमिदमित्यादि प्रतिपादितमित्यन्तेन मूलेन ।

**अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा प्रशासितृत्वरूपात्मत्वेन सर्वेषां जनानामन्तःप्रविष्टः। अतः सर्वात्मा सर्वेषां जनानामात्मा। सर्वंश्चास्य शरीरमिति विशेषतो ज्ञायते ब्रह्मात्मकत्वम्। आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद। यस्यात्मा शरीरम्। आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतमिति च। अत्राप्यनेन जीवेन आत्मनेति इदमेव ज्ञायत इति पूर्वमेवोक्तम्। अतः सर्वस्य चिदचिद्वस्तुनो ब्रह्म-शरीरत्वात् सर्वशरीरं सर्वप्रकारं ब्रह्मैवाभिधीयत इति तत्त्वमसि सामानाधिकरण्येन जीवप्रकारं ब्रह्मैवाभिहितम्।**

---

उक्तश्रुत्या विहितमिदं ब्रह्मात्मकत्वं प्रपञ्चस्य किमात्मशरीरभावेन, उत स्वरूपेण विवेचनीयम्। अन्यतरं परतया निर्णेयम्। स्वरूपेण तत्स्वीकारे अचिद्-ब्रह्मणो स्वरूपेणैक्यस्वीकारे "तदैक्षत बहु स्यां प्रजायेय" इति उपक्रमश्रुत्यावगतस्य क्षण-कर्तृत्वस्य सत्यसङ्कल्पत्वस्य च चेतनधर्मस्याचेतने अचिति बाधेन विरोधः। तथा जीवब्रह्मणो स्वरूपत ऐक्यस्वीकारे ब्रह्मणो जीवतया कर्मवश्यत्वेन सङ्कल्पस्य कर्मा-धीनतया सत्यसङ्कल्पत्वश्रुतिविरोधः। तदाऽऽपत्तिनिरासाय ब्रह्मात्मकत्वं शरीर-शरीरिभावेन स्वीकार्यम्। न केवलमुक्तस्य तदैक्षत श्रुत्यर्थस्य अन्यथानुपपत्त्या तत्स्वी-कार्यम्; अपि तु श्रुतिरपि कण्ठतो वदति, तदाह—शरीरात्मभावेन च तदात्मकत्वं श्रुत्य-न्तराद् विशेषतोऽवगतम्। अन्तःप्रविष्टः शास्ता जनानां सर्वात्मेति, प्रशासितृत्वरूपेण प्रवृत्तिपर्यवसायिबोधानुकूलकृतिमत्त्वेन रूपेणात्मत्वेन सर्वेषां जनानां लोकानामन्तःप्रविष्टः। अतः सर्वात्मा सर्वेषां जनानामात्मा। अन्तःप्रवेशोक्त्या बहिः शासितुर्नृपस्य व्यावृत्तिः। उक्तलक्षणप्रशासनकर्तृत्वोक्त्याऽचेतनविभुगगनव्यावृत्तिरनया अर्थतः शरीरात्मभावो व्यज्यते। फलतः ब्रह्म सर्वात्मा, अस्य सर्वं शरीरमिति विशेषतो ज्ञायते। ब्रह्म चेतनाचेतनयोः शरीरशरीरिभावं कण्ठतः श्रुतिर्वदति। तथा हि य आत्मनि जीवे तिष्ठन्नधितिष्ठन्नात्मनो जीवस्यान्तर अन्तर्यामीयमन्तर्यामिणमात्मा जीवो न वेद, प्रकृतियोगेन अविद्यावेष्टितत्वात्। यस्यान्तर्यामिण आत्मा, जीवः, शरीरं ब्रह्मसत्ताधीन-सत्ताकम्, य अन्तर्यामी आत्मानं यमयति, इष्टानिष्टयोः प्रकृतिपारवश्यात् प्रथमप्रवृत्तं निर्वाहयति।

"स त आत्मा अन्तर्याम्यमृत" इति श्रुत्यन्तरे यथा ब्रह्मप्रपञ्चयोः शरीर-शरीरिभावः कण्ठत उक्तस्तथा सद्विद्याप्रकरणेऽप्यनेन जीवेन आत्मनानुप्रविश्येत्यादि श्रुतिसिद्धजीवशरीरकब्रह्मानुप्रवेशकृतसकलपदानां पदार्थत्वम्। "सदेव सोम्येदमग्र" इत्यत्र सूक्ष्मचिदचिच्छरीरकब्रह्मरूपता सच्छब्दवाच्या। स्थूलचिदचिच्छरीरकब्रह्मण इदंशब्दवाच्यता, इत्याह—अत्रापि सद्विद्यायामपि अनेन जीवेनात्मनेति श्रुति-

एवमभिहिते सत्ययमर्थो ज्ञायते, त्वमिति यः पूर्वं देहाधिष्ठातृतया प्रतीतः, स परमात्मशरीरतया परमात्मप्रकारभूतः परमात्मपर्यन्तः पृथक्स्थितिप्रवृत्त्यनर्हः। अतस्त्वमिति शब्दस्त्वत्प्रकारविशिष्टं त्वदन्तर्यामिणमेवाचष्ट इति, "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति ब्रह्मात्मकतयैव जीवस्य ब्रह्मशरीरिणः स्वनामभाक्त्वात्। तत्त्वमिति समानाधिकरणवृत्तयोर्द्वयोरपि पदयोर्ब्रह्मैव वाच्यम्। तत्र तत्पदं जगत्कारणभूतं सकलकल्याणगुणगणाकरं निरवद्यं निर्विकारमाचष्टे। त्वमिति च तदेव ब्रह्म जीवान्तर्यामिरूपं सशरीरजीवप्रकारविशिष्टमाचष्टे। तदेवं प्रवृत्तिनिमित्तभेदेनैकस्मिन् ब्रह्मण्येव तत्त्वमिति

---

सिद्धार्थसामर्थ्येनेदमेव ज्ञायते शरीरशरीरिभावसम्बन्धकृतब्रह्मपर्यन्ताभिधायकत्वं सदादिशब्दानाम्। अतो ब्रह्मप्रपञ्चयोः शरीरशरीरिभावसम्बन्धस्य श्रुतिसिद्धत्वात्। सर्वस्य चिदचिद्वस्तुनो ब्रह्मशरीरत्वात् सर्वशरीरं सर्वप्रकारं चिदचिच्छरीरकम्, चिदचित्प्रकारकं ब्रह्मैव सर्वशब्दैरभिधीयत इति हेतोः तत्त्वमसीति सामानाधिकरण्येनैकार्थबोधकसमानविभक्तिकत्वेन जीवशरीरकतया जीवप्रकारं ब्रह्मैवाभिहितम्।

तत्त्वं पदाभ्यामेकस्मिन्नर्थे सामानाधिकरण्येनाभिहिते सत्ययमर्थो ज्ञायते। उद्दालकस्य श्वेतकेतुबुबोधयिषयाऽयं तात्पर्यविषयोऽर्थोऽवगम्यते। त्वमिति यः पूर्वं देहाधिष्ठातृतया प्रतीतः, स परमात्मशरीरतया परमात्मप्रकारभूतः परमात्मपर्यन्तः। यथा लोके घटपदार्थो न घटत्वमात्रपर्यन्तस्तथा जीवपदार्थो न देहाधिष्ठातृजीवमात्रपर्यन्तः; अपि तु देहाधिष्ठातृजीवशरीरकब्रह्मपर्यन्तः। पृथक्स्थितिप्रवृत्यनर्हो यथा घटत्वं घटात्, गोत्वं गोव्यक्तेरतो ब्रह्मणः पृथक्स्थित्यनर्हत्वात् त्वंशब्दस्त्वत्प्रकारविशिष्टं तदन्तर्यामिणमेवाचष्ट इति। तत्त्वमसीत्यत्र त्वंशब्दो जीवप्रकारविशिष्टं जीवान्तर्यामिणं परमात्मानमेवाचष्टे बोधयति।

अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणीति, ब्रह्मात्मकतयैव जीवस्य ब्रह्मशरीरिणः स्वनामभाक्त्वम्। उक्तश्रुतिबलाद् जीवस्य जीवनामयोगित्वं जीवाकारश्च ब्रह्मानुप्रवेशकृते, घटादेस्तद्भाक्त्वं तु जीवशरीरकब्रह्मानुप्रवेशकृतम्, तत्त्वमिति समानाधिकरणवृत्तयोरेकार्थनिरूपितवृत्तिमतोर्द्वयोस्तत्त्वं पदयोर्ब्रह्मैव वाच्यम्, तत्र वाक्ये तत्पदं जगत्कारणभूतं सकलकल्याणगुणाकरं निरवद्यं निर्विकारमाचष्टे। तत्पदं पूर्वपरामर्शकतया सदेव सोम्येदमिति तदैक्षतेति सिद्धस्योपादानात्। निमित्तकारणत्वस्य "यः सर्वज्ञः स सर्ववित्", "परास्य शक्तिर्विविधैव श्रूयते" इत्यादि सिद्धस्य सकलकल्याणगुणाकरत्वस्य विजरो विमृत्युरपि इत्यादि सिद्धस्य निखिलहेयप्रत्यनीकत्वस्य शोधकवाक्यावगतस्य सत्यज्ञानन्त्वनिर्विकारत्वादेश्च बोधकम्।

**द्वयोः पदयोर्वृत्तिरुक्ता, ब्रह्मणो निरवद्यत्वं निर्विकारत्वं सर्वकल्याणगुणाकरत्वं जगत्कारणत्वं चाबाधितम्। अश्रुतवेदान्ताः पुरुषाः सर्वे पदार्थाः सर्वे जीवात्मानश्च ब्रह्मात्मका इति न पश्यन्ति, सर्वशब्दानां च केवलेषु तत्तत्पदार्थेषु वाच्यैकदेशेषु वाच्यपर्यवसानं मन्यन्ते। इदानीं वेदान्तवाक्यश्रवणेन ब्रह्मकार्य्यतया तदन्तर्यामिकतया सर्वस्य ब्रह्मात्मकत्वं सर्वशब्दानां तत्तत्प्रकारसंस्थितब्रह्मवाचित्वं च जानन्ति।**

---

त्वमिति च—त्वम्पदं च तदेव ब्रह्म। जगत्कारणात्वादिविशिष्टं ब्रह्म जीवान्तर्यामिरूपं जीवनामरूपनिर्वाहकं सशरीरजीवप्रकारं देहाधिष्ठातृ जीवाधिष्ठातृ आचष्टे बोधयति। तदेवं तत्त्वंपदयोर्जगत्कारणत्वजीवशरीरकत्वप्रवृत्तिनिमित्तभेदेनैकब्रह्मार्थबोधकत्वादेव प्रवृत्तिनिमित्तभेदेनैकस्मिन् ब्रह्मणि एकविशेष्य एव तत्त्वंपदयोर्वृत्तिरुक्ता, भिन्नप्रवृत्तिनिमित्तजगत्कारणत्वजीवशरीरकत्वनिष्ठप्रकारतानिरूपिता या ब्रह्मनिष्ठा विशेष्यता, तन्निरूपिता वृत्तिः शक्तिः, तत्त्वंपदनिष्ठेति सामानाधिकरण्यं प्रोक्तम्। ब्रह्मणो जगत्कारणत्वं निरवद्यत्वं निर्विकारत्वं सर्वकल्याणगुणाकरत्वं चाबाधितं पारमार्थिकम्। सद्विद्याप्रकरणाधीतपूर्वश्रुत्युक्तानामेषां गुणानां पुरुषदोषविधुरतत्त्वमसिघटकतत्पदपरामृष्टत्वात्।

सर्वशब्दानां ब्रह्मपर्यन्ताभिधायित्वे लोकसिद्धगवादिपदनिष्ठगवाद्याकृतिविशिष्टनिरूपितवृत्तिविरोधो न शङ्क्यः, यथा घ्राणस्य श्रवणस्य च गन्धस्य शब्दस्य च ग्राहकत्वेऽपि प्रमाणान्तरेण प्रत्यक्षेण अनुमानेन चावगतघटाकाशयोर्वृत्तितयैव ग्राहकत्वं प्रमीयते लोकेन, न तु तदवृत्तितया। तथा गवादीनां प्रत्यक्षादिप्रमाणेन सिद्धगवाद्याकृतिषु अश्रुतवेदान्तैर्लोकैर्गृहीतापि वृत्तिरनेन जीवेनात्मनानुप्रविश्य "नामरूपे व्याकरवाणि" इत्यादि वेदान्तव्युत्पन्नैश्च तैर्ब्रह्मपर्यन्ते निर्धार्यते, इत्याह मूले—अश्रुतवेदान्ता इति। अनधीतजगद्ब्रह्मपरिणामत्वब्रह्मात्मकत्वबोधकवेदान्ताः पुरुषाः सर्वे पदार्थाः, सर्वे जीवात्मानश्च ब्रह्मात्मका इति न पश्यन्ति, सर्वशब्दानां च केवलेषु तत्तत्पदार्थेषु वाच्यैकदेशेषु तत्तदाकृतिमत्पिण्डेषु वाच्यपर्यवसानं मन्यन्ते, वाच्यतापर्याप्ति मन्यन्ते। इदानीं ब्रह्मकार्यतादिबोधकवेदान्तश्रवणोत्तरवेलायां वेदान्तवाक्यश्रवणेन श्रवणस्मरणप्रयोज्यसमूहालम्बनात्मकज्ञानेन ब्रह्मकार्यतया तदन्तर्यामिकतया ब्रह्मान्तर्यामिकतया सर्वस्य चराचरजगतो ब्रह्मात्मकत्वं सर्वशब्दानाम्—घटादिजीवादिशब्दानां तत्तत्प्रकारसंस्थितं घटादिजीवप्रकारात् संस्थेत्स्थमिति प्रतीतिविषयाद्विशिष्टब्रह्मवाचित्वं जानन्ति।

नन्वेवं गवादिशब्दानां तत्तत्पदार्थवाचितया व्युत्पत्तिर्बाधिता स्यात्, नैवम्, सर्वे शब्दा अचिज्जीवविशिष्टस्य परमात्मनो वाचका इत्युक्तं "नामरूपे व्याकरवाणि" इत्यत्र। तत्र लौकिकास्तु पुरुषाः शब्दं व्याहरन्तो शब्दवाच्ये प्रधानांशस्य परमात्मनः प्रत्यक्षाद्यपरिच्छेद्यत्वाद्वाच्यैकदेशभूते वाच्यसमाप्तिं मन्यन्ते। वेदान्तश्रवणेन च व्युत्पत्तिः पूर्यते।

एवमेव वैदिकास्सर्वे शब्दाः परमात्मपर्यन्तान् स्वार्थान् बोधयन्ति। वैदिका एव सर्वे शब्दा वेदादेवोद्धृत्योद्धृत्य परेणैव ब्रह्मणा सर्वपदार्थान् पूर्ववत्सृष्ट्वा तेषु परमात्मपर्यन्तेषु पूर्ववन्नामतया प्रयुक्ताः। तदाह मनुः—

सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे॥ इति।

---

वेदान्तवाक्यं प्रत्यक्षसापेक्षलोकप्रसिद्धतत्तत्पदार्थनिरूपितशक्तिग्रहसापेक्षतया बोधकमिति। अन्यत्र जीवमात्रे प्रत्यक्षावगतवृत्ति ब्रह्मपर्यन्ते बोधयितुं न शक्नुयात्, अत एवादित्यो यूप इत्यत्र प्रत्यक्षावगतव्युत्पन्नादित्ययूपपदयोरेकार्थबोधकत्वाभावेन बाधाल्लक्षणा। एवं तत्त्वंपदयोः सामानाधिकरण्यं न सम्भवति, इत्याशङ्कते—ननु इत्यादिना। नन्वेवं गवादिशब्दानां तत्तत्पदार्थगवाद्याकृतिविशिष्टवाचितया व्युत्पत्ति-शक्तिग्रहो बाधितः स्यात्, लोकव्युत्पत्तेर्वेदान्तवाक्यजन्यबोधे सहकारितया बाधो न युक्तः, नैवम्, आदित्यो यूप इत्यत्रानन्यथासिद्धत्वं यूपादित्यभेदप्रत्यक्षनिष्ठं यूपादितादा-त्म्यपरवाक्यस्वारस्यंविरोधि, न तु प्रत्यक्षत्वाद् ज्वालैक्यप्रत्यक्षस्य भेदानुमानभञ्जक-त्वाभावात्। अत्र न तत्पदस्य तत्तत्पदार्थमात्रपर्यन्तत्वग्रहणमन्यथासिद्धं दोषसिद्धमिति न वेदान्तबोधितव्युत्पत्तिप्रतिबन्धकम्।

तथा हि सर्वे शब्दा अचिज्जीवविशिष्टस्य परमात्मनो वाचका इत्युक्तं "नामरूपे व्याकरवाणि" इत्यत्र। इयं ब्रह्मपर्यन्तव्युत्पत्तिरनन्यथासिद्धा घटाद्याकृतिपर्यन्तत्तामात्र-शक्तिग्रहप्रतिबन्धिका स्यात्। तया गवाद्याकृतिनिरूपितशक्तिर्न प्रतिबध्यते, ब्रह्मपर्यन्त-ताऽविषया प्रतिबध्यते। लौकिकाः पुरुषाः शब्दवाच्यपरमात्मनः प्रत्यक्षापरिच्छेद्यत्वाद् वाच्यैकदेशमात्रे दोषाद् व्युत्पद्यन्ते, वेदान्तज्ञानेन तत्पर्यन्तत्तामात्रशक्तिग्रहबाधपूर्वं प्रत्यक्षसिद्धाकृतिशरीरकब्रह्मणि पर्यन्ते वृत्तिं गृह्णन्ति, इत्याह—पूर्यत इत्यन्तेन।

इत्थं लोकप्रसिद्धतत्तत्पदार्थे गृहीतशक्तिकपदैः वेदान्तवाक्यार्थज्ञानम्, अनेन जीवेनेत्यादि वेदान्तवाक्येन सर्वशब्दानां लोकप्रसिद्धतत्तदर्थशरीरकजीवशरीरब्रह्मणि शक्तिग्रह इति न परस्पराश्रयः। अथ लौकिकशब्दवद् वैदिकशब्दानामपि ब्रह्मपर्यन्ते

संस्थाः—संस्थानानि रूपाणीति यावत् । आह च भगवान् पराशरः—

नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥ इति ।

श्रुतिश्च "सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्" इति । सूर्यादीन् पूर्ववत्परिकल्प्य नामानि च पूर्ववच्चकारेत्यर्थः ।

एवं जगद्ब्रह्मणोरनन्यत्वं प्रपञ्चितम्, तेनैकेन ज्ञातेन सर्वस्य ज्ञाततोपपादिता भवति, सर्वस्य ब्रह्मकार्यत्वप्रतिपादनेन तदात्मतयैव सत्यत्वं

---

व्युत्पत्तिः साध्यते । एवमेव लौकिकशब्दव्युत्पत्तिप्रकारेणैव वैदिकाः सर्वे शब्दा इन्द्रादयो ब्रह्मपर्यन्तान् स्वार्थान् इन्द्रशरीरकाब्रह्मादिरूपानर्थान् बोधयन्ति । वेदान्तज्ञानेन वैदिका एव शब्दा ब्रह्मपर्यन्तवाचकाः, लौकिकास्तु प्रत्यक्षसिद्धार्था इति न । वैदिका एव सर्वे शब्दा देवमनुष्यसूर्यचन्द्रादयो वेदादेव ऋग्यजुःसामाथर्वरूपात्तत्तत्पदानि देवमनुष्यादिरूपाणि उद्धृत्य-उद्धृत्य पृथक् पृथग् उच्चार्य तत्तदर्थान् स्मृत्वा परेणैव ब्रह्मणा सृष्ट्वा पूर्वकल्प इवास्मिन् कल्पेऽपि स्वात्मकतत्तत्पदार्थान् निर्माय स्वयं तत्तद्रूपेण परिणम्य तेषु स्वरचितस्वात्मकेन्द्राद्यर्थेषु ब्रह्मपर्यन्तेषु पूर्ववन्नामतया पूर्वकल्प इव नामतया संज्ञया प्रयुक्तास्त इन्द्रादिशब्दाः । वेदशब्देभ्यः पदार्थस्मरणपूर्वकसृष्टौ प्रमाणं मनुः—

सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥

संस्थानसंस्थितिरपि तु संस्थानानि रूपाणि भिन्नभिन्नदेवमनुष्याद्याकृतितया द्रव्यगुणक्रियादिरूपा निर्ममे, स्वात्मकतत्तद्रूपेण परिणतमभूद्ब्रह्म । मनुपराशरयोरैककण्ठ्यमपि, तथा हि आह च पराशरः—नामरूपमित्यादि नामेन्द्रादिसंज्ञा, रूपमिन्द्राद्यर्थाः । उभाभ्यामुपबृंहिता श्रुतिरपीत्याह—श्रुतिश्चेत्यादीति । सूर्यादीन् स्वात्मकसूर्याद्यर्थान् पूर्ववत्पूर्वकल्पवत् परिकल्प्य नामरूपविभागार्हीकृत्य नामानि पूर्वकल्पे यो यत्रार्थे तत्रार्थे कृतवान् संकेतितवान् । ननु लोके गृहाण तत्र वेदे गृहाणेति न लोके वैदिकनामकरणमिति चेन्न, नामवैदिकमेवानुपूर्वीभेदाल्लौकिकत्वात्, अत एव लौकिकवैदिकशब्दयोर्लक्षणभेदः सूत्रभेदः ।

अयमर्थः श्वेतकेतो-इत्यारभ्यैतावता ग्रन्थेन प्रतिपादयितुमिष्टस्यार्थस्य प्रयोजनमाह—एवमिति । एवं ब्रह्मणो जगदुपादाननिमित्तोभयत्वस्वीकारेण जगद्ब्रह्मणोरनन्यत्वं विशेष्यतयैकत्वं प्रपञ्चितम्, तेन जगतो ब्रह्मात्मकत्वेन सत्यत्वेन, एकेन ज्ञातेन—एकेन ब्रह्मणा जगदुपादाननिमित्ततया ज्ञातेन सर्वस्य जगतो ज्ञातता ब्रह्मात्मकतयैव जगतः

नान्यथेति तत्सत्यमित्युक्तम्, स्वनिष्ठतयेत्यर्थः। यथा दृष्टान्ते सर्वस्य मृद्विकारस्य मृदात्मनैव सत्यत्वम्।

शोधकवाक्यान्यपि निरवद्यं सर्वकल्याणगुणाकरं परं ब्रह्म शोधयन्ति। सर्वप्रत्यनीकाकारताबोधनेऽपि तत्तत्प्रत्यनीकाकारतायां भेदस्यावर्जनीयत्वान्न निर्विशेषवस्तुसिद्धिः। ननु ज्ञानमात्रं ब्रह्मेति प्रतिपादिते निर्विशेष-

---

सत्यत्वं स्वात्मकतयाऽसत्यत्वमिति श्रुतावुक्तम्, तत्सत्यमिति। जगतो ब्रह्मात्मकतया सत्यत्वं महावाक्यं यत्तत्त्वमसि, तदनुगुणं तज्जगदुपादाननिमित्तसर्वज्ञसर्वशक्तिलक्षणं ब्रह्म-त्वं देहशरीरकजीवप्रकारात्माऽसि। ब्रह्मणः सत्यत्वे तदात्मकतया स्थितं वस्तुसत्यमकामत आयातम्, तदनुगुणं दृष्टान्तमाह—यथा सोम्यैकेन मृत्पिण्डेन ज्ञातेन सर्वं मृन्मयं विज्ञातं भवतीति। मृदि घटाद्युपादानत्वेन सति सर्वं तत्परिणामं घटशरावादि मृत्कार्यतया मृदात्मकतया ज्ञातं भवति। अत्र मृदः सत्यत्वे मृदात्मकतयैव घटाद्यर्थस्य सत्यत्वं मृद्रूपतामपहाय न केवलं घटाद्याकृतेः सत्यता घटपदार्थत्वम्, एवं च मृदो घटादेश्च सत्यत्वं लोकप्रतिपन्नम्, तथा तत्त्वमसि वाक्येऽपि त्वंपदार्थस्य जीवस्य ब्रह्मात्मकतामपहाय न सत्यता न जीवपदार्थता, तदाह—दृष्टान्ते सर्वस्य मृद्विकारस्य मृदात्मनैव सत्यत्वमिति।

ब्रह्मणो जगत्कारणत्वेऽवगते कारणत्वेन कुलालवदाशङ्कितं परिच्छिन्नत्वाल्पत्वबद्धत्वस्वप्रयोजनत्वादीनि रक्षितुं प्रवृत्तं शोधकवाक्यं सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि सविशेषपरमेव, इत्याह—**शोधकवाक्यान्यपीति**। सत्यं ज्ञानमित्यादीनि निरवद्यं प्राकृतगुणरहितं सर्वकल्याणगुणाकरं सर्वज्ञत्वसर्वशक्तिविशिष्टमिति ब्रह्म शोधयन्ति। तथा हि निर्गुणं निरञ्जनमिति सामान्यतो गुणनिषेधः। पशुना यजेदित्यत्र पशुपदं छागस्य वपाया मेदस इत्यादिमन्त्रवर्णात् पशुविशेषच्छागपर्यवसायि यथा, तथा शोधकवाक्यम्—यः सर्वज्ञः स सर्ववित्, परास्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया चेति। कल्याणगुणबोधकश्रुत्यानुगुण्यात् प्राकृतगुणनिषेधविशेषपर्यवसायी सर्वश्रुतिप्रामाण्यमेकरूपेणाध्यवसेयम्। न तत्र गौणमुख्यकल्पनावसरो देयः।

अथ मूलकारः सामानाधिकरण्यानुपपत्त्या सत्यं ज्ञानमित्यादौ निर्विशेषवस्तुसिद्धिं परिहरति—सर्वप्रत्यनीकाकारताबोधनेऽपीति। शोधकवाक्ये सत्यपदमनृतव्यावृत्तिपरम्, ज्ञानपदं जडव्यावृत्तिपरमनन्तपदं देशकालवस्तुपरिच्छेदव्यावृत्तिपरम्। व्यावृत्तेश्चाभावरूपतया, अभावस्य चाधिकरणस्वरूपतया ता व्यावृत्तयो ब्रह्मैवेति, न सविशेषप्रत्ययः शोधकवाक्येनेति कल्पनेऽपि। तत्तत्प्रत्यनीकाकारतायां ब्रह्मणोऽनृतादिभिन्नरूपतायां ब्रह्मणि अनृतादिभेदधर्मा आवर्जनीया अप्रतीकार्यास्तस्मान्न निर्विशेषवस्तुसिद्धिः। इदमुक्तं भवति यदनृतादिभेदस्य ब्रह्मधर्मत्वानङ्गीकारपूर्वकं ब्रह्मस्वरूपत्वाङ्गीकारे ब्रह्मस्वरूपसत्तायामध्यासस्य ब्रह्मणि अनृतादितादात्म्यग्रहस्यानु-

ज्ञानमात्रं ब्रह्मेति निश्चीयते। नैवम्, स्वरूपनिरूपकधर्मशब्दा हि धर्ममुखेन स्वरूपमपि प्रतिपादयन्ति, गवादिशब्दवत्। तथाह सूत्रकारः—"तद्गुणसारत्वात् तद्व्यपदेशः प्राज्ञवत्"।

"यावदात्मभावित्वाच्च न दोषः" इति ज्ञानेन धर्मेण स्वरूपमपि निरूपितम्, न तु ज्ञानमात्रं ब्रह्मेति। कथमिदमवगम्यते इति चेत्, "यः सर्वज्ञः स सर्ववित्" इत्यादि ज्ञातृत्वश्रुतेः। परास्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च, विज्ञातारमरे केन विजानीयादित्यादिश्रुतिशतसमधिगतमिदम्, ज्ञानस्य धर्ममात्रत्वाद् धर्ममात्रस्यैकस्य वस्तुत्वप्रतिपादनानुपपत्तेश्च।

---

वृत्तिर्न सिद्धयेत्। सरूपस्य स्वप्रकाशस्याध्यासनिवर्तकत्वमकामेन त्वया स्वीकार्यं स्यात्। तस्मात्त्वया ब्रह्मनिष्ठधर्मस्यानृतादिव्यावृत्तिरूपस्य ज्ञानमध्यासनिवर्तकमभ्युपेयम्। तेन स्वरूपे सत्यपि भाने निरुक्तधर्मज्ञानाभावादध्यासो न निवर्तते। तच्च निरुक्तव्यावृत्तिधर्मस्वीकारेणैवेति न निर्विशेषवस्तुसिद्धिः।

ननु ज्ञानमात्रं ब्रह्मेति प्रतिपादिते मात्रपदेनेतरधर्माश्रयत्वनिषेधाद् निर्विशेषब्रह्मसिद्धिश्चेत्, मैवम्। स्वरूपनिरूपकधर्माः—गोस्वरूपनिरूपकघटस्वरूपनिरूपकपटस्वरूपनिरूपकगोत्वादिधर्माः, तेषां वाचकाः शब्दाः धर्मशब्दा गोघटपटादिशब्दा धर्ममुखेन घटत्वादिधर्मप्रकारेण स्वरूपमपि धर्मिणमपि प्रतिपादयन्ति। तथा ज्ञानं ब्रह्मेत्यस्य स्वरूपनिरूपकधर्मज्ञानम्, तद्वाचकज्ञानशब्देन ज्ञानविशिष्टधर्मिबोधने तात्पर्यावधारणात्। तदाह सूत्रकारः—तद्गुणसारत्वात्। गुणो ज्ञानं तत्सारत्वात्। ज्ञानरूपनिरूपकधर्मवत्वात्। तद्व्यपदेशो ज्ञानशब्देन = जोवस्य व्यवहारः प्राज्ञवत्। यथा प्राज्ञस्य परमात्मनः आनन्दरूपस्वरूपनिरूपकधर्मवत्वाद् 'आनन्दं ब्रह्मेति' इत्यत्र आनन्दशब्देन व्यपदेशः, तथा 'विज्ञानं यज्ञं तनुते' इत्यादौ विज्ञानस्य सारभूतस्वरूपनिरूपकजोवगुणत्वाद् ज्ञानशब्देन व्यवहारः। एवं ब्रह्मणोऽपि ज्ञानं सारगुण इति ज्ञानपदेनाभिधानं ज्ञानमात्रं ब्रह्मेत्यत्र इति।

"ज्ञानस्य विज्ञानं यज्ञं तनुते" इत्यत्र ज्ञानाश्रये लक्षणा न शङ्क्या, ज्ञानस्य यावदात्मभावित्वेनात्मस्थितिकालपर्यन्तस्थायित्वेन स्वरूपनिरूपकतया धर्मिपर्यन्तनिरूपितशक्तिमत्वात्। यथा गोपर्यन्तस्थायिगोत्ववाचकगोशब्दस्तदाश्रयनिरूपितशक्तिमान्। ज्ञानेन धर्मेण न ज्ञानमात्रस्यैव निरूपणम्; अपि तु स्वरूपधर्मिरूपमपि ब्रह्म निरूपयति। तत्र प्रमाणम्—यः सर्वज्ञः स सर्ववित्, परास्य शक्तिरित्यादि, विज्ञातारमरे केन विजानीयादित्यादि श्रुतिशतसमधिगतम्। अयं भावः– ज्ञातृपरश्रुतिर्ब्रह्मो ज्ञानपरा-

अतः शक्तिज्ञानादिपदानि स्वार्थभूतज्ञानादिविशिष्टमेव ब्रह्म प्रतिपादयन्ति,तत्त्वमिति द्वयोः पदयोः स्वार्थप्रहाणेन निर्विशेषवस्तुस्वरूपोपस्थानपरत्वे मुख्यार्थपरित्यागश्च। ऐक्ये तात्पर्यनिश्चयान्न लक्षणादोषः, सोऽयं देवदत्त इतिवत्, यथा सोऽयमित्यत्र स इति शब्देन देशान्तरकालान्तरसम्बन्धी पुरुषः प्रतीयते, अयमिति च सन्निहितदेशवर्तमानकालसम्बन्धी, तयोः सामानाधिकरण्येनैक्यं प्रतीयते। तत्रैकस्य युगपद्विरुद्धदेशकालसम्बन्धितया प्रतीतिर्न घटते, इति द्वयोरपि पदयोः स्वरूपमात्रोपस्थापनपरत्वम्। स्वरूपस्य चैक्यं प्रतिपाद्यत इति चेत्, नैतदेवम्। सोऽयं देवदत्त इत्यत्रापि

---

त्मेति ज्ञातृश्रुत्यनुगुणा ज्ञानश्रुतिर्नेयेति। ज्ञानपराणां ज्ञानिपरत्वम्। श्रुतौ स्वाभाविकपदेन न ज्ञातृत्वेऽऽध्यासिकत्वावकाशः, ज्ञानस्य धर्मत्वेन न तन्मात्रस्य वस्तुत्वम्।

ज्ञानस्य धर्ममात्रस्य धर्मिरहितस्य वस्तुत्वासम्भवः। यत्र यत्र धर्मत्वं तत्र तत्र धर्मिपरतत्त्वमिति व्याप्तिविरोधात्। अन्यथा सकलतन्त्रविरुद्धस्वतन्त्रधर्ममात्रस्वरूपज्ञानरूपवस्तुस्वीकारापत्तिः। यदि ज्ञानमात्रस्य श्रुतिसिद्धस्य यः सर्वज्ञ इत्यादि श्रुतिबलेन ज्ञानान्तराश्रयत्वमपि स्वीक्रियते, तदापि पूर्वोक्तव्याप्तिविरोधश्च स्यादेवेति अकामेन भवताऽपि धर्मिपरतन्त्रो ज्ञानधर्मोऽभ्युपेयः। एतदुक्तं भवति—सत्यं ज्ञानमित्यादि श्रुतिबलेन ब्रह्मणो ज्ञानमात्ररूपत्वे यत्र धर्मत्वं तत्र धर्मिपरतन्त्रत्वमिति व्याप्तिविरोधः। यदि पूर्वश्रुतिबलेनोक्तव्याप्तिर्बाध्यते, तदा सत्यमित्यादि श्रुतिबलेन एकस्य ब्रह्मणो ज्ञानरूपत्वं "यः सर्वज्ञः स सर्ववित्" इत्यादिश्रुत्या ज्ञानाश्रयत्वमपि स्वीक्रियताम्। ज्ञानस्य ज्ञानाश्रयत्वाभाव इति व्याप्तिर्बाध्यतामिति प्रतिवन्द्यैव व्याप्तिविरोधः परिहरणीयः। तेन ज्ञानाश्रयप्रतिपादिकानां श्रुतीनामाधिक्यात् तदनुगामिनी ज्ञानरूपप्रतिपादिनी श्रुतिः कार्या, भूयसा व्यपदेश इति मीमांसकन्यायात्। अतः "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्र सत्यादिपदानि स्वार्थभूतसत्यज्ञानविशिष्टमेव ब्रह्म प्रतिपादयन्ति। सत्यादिपदानां सत्याद्याश्रयधर्मिपर्यन्तवृत्तिमत्वात्। तत्पदं पूर्वोपपादनप्रकारेण सर्वशक्तिसर्वज्ञाननिखिलहेयप्रत्यनीकत्वकल्याणगुणैकतानत्वविशिष्टब्रह्मपरं त्वंपदं निरुक्तोपपत्तिप्रकारेण देहशरीरकजीवशरीरकब्रह्मपरमिति वस्तुस्थितिः। उभयोः पदयोः स्वार्थप्रहाणेन भागत्यागलक्षणया निर्विशेषवस्तुस्वरूपचैतन्यमात्रस्वरूपोपस्थापनपरत्वे मुख्यार्थबाधः। उपक्रमोपसंहारादि तात्पर्यनिर्णायकलिङ्गैनैक्ये चैतन्यमात्रे तात्पर्यनिर्णयान्न लक्षणादोषः, "सोऽयं देवदत्तः" इतिवत्।

अत्र तदिदम्पदयोर्विलक्षणदेशकालविशिष्टपुरुषवृत्तयोरपि तथाभूतयोस्सामानाधिकरण्यानुपपत्त्या विभिन्नविशेषणविशिष्टयोरभेदे विशेषणयोरपि अभेदापत्तिः, अतः

लक्षणागन्धो न विद्यते, विरोधाभावात् । एकस्य भूतवर्तमानक्रियाद्वय-सम्बन्धो न विरुद्धः । देशान्तरस्थितिभूता सन्निहितदेशस्थितिर्वर्तते, अतो भूतवर्तमानक्रियाद्वयसम्बन्धितयैक्यप्रतिपादनमविरुद्धम्, देशद्वयविरोधश्च कालभेदेन परिहृतः ।

लक्षणायामपि न द्वयोरपि पदयोर्लक्षणासमाश्रयणम्, एकेनैव लक्षितेन विरोधपरिहाराद् लक्षणाभाव एवोक्तः, देशान्तरसम्बन्धितया भूतस्यैवान्यदेशसम्बन्धितया वर्तमानत्वाविरोधात् । एवमत्रापि जगत्कारण-भूतस्यैव परस्य ब्रह्मणो जीवान्तर्यामितया जीवात्मत्वमविरुद्धमिति

---

सामानाधिकरण्यानुपपत्त्या स्वमात्रे देवदत्तमात्रे लक्षणामङ्गीकृत्याभेदप्रतीतिरुपपाद्यते । तथात्रापीति भावः, इत्याह—यथा सोऽयम् इत्यत्र सशब्देन देशान्तरकालान्तरसम्बन्धी पुरुषः प्रतीयते । अयमितिपदेन सन्निहितदेशवर्तमानकालसम्बन्धो प्रतीयते । तयोः सामानाधिकरण्येनैकार्थबोधकत्वेनैक्यं तयोरर्थयोः प्रतीयते । तत्रैकस्य युगपद् एककाला-वच्छेदेन विरुद्धदेशकाशीदेशप्रयागदेशविरुद्धकालभूतकालवर्तमानकालसम्बन्धितया प्रतीतिर्न घटते, न सम्भवति । अतः स्वरूपोपस्थापनपरत्वं स्वरूपस्य चैक्यञ्च प्रतीयते चेत्, नैतदेवम्, सोऽयं देवदत्त इत्यत्रापि लक्षणागन्धो न विद्यते । अन्यतरस्मिन्नपि न विद्यते । एकस्य विभिन्नदेशवृत्तेरेककालसम्बन्धिता न घटते । विभिन्नकालसम्बन्धिता तु घटत एव । 'सोऽयम्' इत्यत्र देवदत्तस्यैकस्य विभिन्नकालवृत्तित्वविशिष्टविभिन्नदेश-वृत्तित्वं प्रतीयत इति विरोधाभावान्न लक्षणागन्ध इत्युक्तं कालभेदेन परिहृत इत्यन्तेन ग्रन्थेन ।

"सोऽयं देवदत्तः" इत्यत्र तच्छब्दस्यैव भूतकालदेशान्तररहितदेवदत्तस्वरूपमात्र-स्यैव लक्षकत्वे इदंशब्दस्य वर्तमानकालैतद्देशविशिष्टदेवदत्तमुख्यार्थपरत्वेऽपि विरोधा-भावात् सामानाधिकरण्यमुपपन्नं कृतं द्वयोर्लक्षणया इत्याह—लक्षणायामपीत्यादिना । अथवा नोभयत्र लक्षणा, देशान्तरसम्बन्धितया भिन्नदेशसम्बन्धितया काशीसम्बन्धि-तया भूतस्यैव भूतकालिकसत्ताविशिष्टस्यैवान्यदेश—प्रयागादिदेशसम्बन्धितया वर्तमानत्व-विशेषाद् विशेषाभावाद् भिन्नदेशवृत्तेरेकस्य युगपद् वृत्तित्वं विरुद्धम्, न भिन्नकाल-वृत्तित्वमिति, देशविरोधः कालभेदेन परिहृत इत्यनेन समाहितम् ।

ननु मास्तु 'सोऽयं देवदत्त' इत्यत्र लक्षणा, 'तत्त्वमसि' इत्यत्र तु स्यादित्यत्राह— जीवस्य ब्रह्मणा सहैकत्वे यथा बाधिताधिष्ठानभावकृतं सामानाधिकरण्यम्, तथा ब्रह्मणो जीवान्तर्यामितयापि । शरीरशरीरिभावसामानाधिकरण्यमपि जीवः पुण्यविशेषाद्देवो जातः, पापविशेषात्पशुरित्यत्र शरीरिणो जीवस्य पशुना शरीरेणैकत्वाभावेऽपि तदन्तर्या-

प्रतिपादितम् । यथाभूतयोरेव हि द्वयोरैक्यं सामानाधिकरण्येन प्रतीयते, तत्परित्यागेन स्वरूपमात्रैक्यं न सामानाधिकरण्यार्थः,भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिसामानाधिकरण्यमिति हि तद्विदः तथाभूतयोरेवैक्यं सम्पादितमस्माभिः ।

उपक्रमविरोध्युपसंहारवाक्यतात्पर्यनिश्चयश्च न घटते । उपक्रमे हि "तदैक्षत बहु स्याम" इत्यादिना सत्यसङ्कल्पत्वं जगदेककारणत्वमुक्तम्, तद्विरोधि चाविद्याश्रयत्वादि ब्रह्मणः । अपि चार्थभेदतत्संसर्गविशेषबोधनकृतपदवाक्यस्वरूपतालब्धप्रमाणभावस्य शब्दस्य निर्विशेष-

---

मिणैक्याच्छरीरिशरीरवाचकशब्दयोः जीवपशुशब्दयोः सामानाधिकरण्यम्, तथा तत्पदवाच्यजगत्कारणब्रह्मणः त्वंपदवाच्यजीवाद् भेदेऽपि जीवान्तर्यामिणैक्यात् सामानाधिकरण्यम्, शरीरिशरीरवाचकपदयोस्तत्त्वंरूपयोः । तात्पर्यानुगुणा सर्वपदेषु लक्षणेति डिण्डिमघोषोऽपि निरर्थकोऽत्र भिन्नप्रवृत्तिनिमित्तकत्वे सत्येकार्थबोधकत्वं सामानाधिकरण्यमित्यत्र सर्वेषां सम्मतिस्तस्मात् सूक्ष्मचिदचिद्विशिष्टत्वस्थूलचिदचिद्विशिष्टत्वरूपभिन्नप्रवृत्तिनिमित्तकत्वे सति एकविशेष्यब्रह्मबोधकत्वं सामानाधिकरण्यम्, इत्याह मूले—तथाभूतयोरेव सूक्ष्मचिदचिद्विशिष्टयोः स्थूलचिदचिद्विशिष्टयोरेव ब्रह्मणो द्वयोरैक्यमभेदः । सामानाधिकरण्येन समानविभक्तिकपदाभ्यां प्रतीयते, न स्वरूपैक्यं तत्परित्यागेन—प्रत्यक्षविषयत्वपरोक्षविषयत्वसूक्ष्मस्थूलचिदचिद्वैशिष्ट्यपरित्यागेन स्वरूपमात्रैक्यम् । निर्विशेषचिन्मात्रं न सामानाधिकरण्यार्थः, न सामानाधिकरण्यपदार्थः । भिन्नप्रवृत्तिनिमित्तानां भिन्नशक्यतावच्छेदकानां शब्दानामेकार्थे एकविशेष्ये मुख्ये वृत्तिरेकविशेष्यकबोधजनकत्वं सामानाधिकरण्यमिति तत्त्वविदः सामानाधिकरण्यलक्षणविदो वदन्ति महाभाष्यकारादयः । तथाभूतयोर्भिन्नप्रवृत्तिनिमित्तकयोः सामानाधिकरण्यं सम्पादितमस्माभिर्विशिष्टाद्वैतवादिभिः । तव मते तदनुपपन्नमतः तात्पर्यविरुद्धाया मुख्यवृत्तेरभावाद् न तात्पर्यानुगुणा लक्षणा गरीयसी ।

तत्त्वमसीति वाक्यस्य निर्विशेषपरत्वे जीवाभेदपरत्वे उपसंहारवाक्यं तत्त्वमसीति विरोधि उपक्रमवाक्यस्य तदैक्षतेत्यादि वाक्यस्य स्यात् । उपक्रमे, तदैक्षतेत्यत्र ब्रह्मणो जगत्कारणत्वं सत्यसङ्कल्पत्वमुक्तम् । उपसंहारवाक्येन ब्रह्मणो जीवाभेदबोधनेऽविद्याश्रयत्वापत्तिः । अतो विरोधितात्पर्यनिश्चयश्च न घटते, एवं स्वरूपैक्यपरत्वे उपसंहारवाक्यस्य उपक्रमविरोधः, प्रकृतपरामर्शितच्छब्दावगतगुणगणबाधः, पदद्वयलक्षणा, सामानाधिकरण्यहानिरिति चत्वारो दोषा इति निर्विशेषवस्तुनि प्रमाणाभावः, तथा हि प्रकृतिः प्रातिपदिकादिः, प्रत्ययः सुबादिस्तत्तदर्थभेदनिबन्धनं

**वस्तुबोधनासामर्थ्यान्न निर्विशेषवस्तुनि शब्दः प्रमाणम् । निर्विशेषेत्यादिदिशब्दास्तु केनचिद् विशेषेण विशिष्टतयाऽवगतस्य वस्तुनो वस्त्वन्तरावगतविशेषनिषेधकतया बोधकाः, इतरथा तेषामप्यनवबोधकत्वमेव प्रकृतिप्रत्ययरूपेण पदस्यैवानेकविशेषगर्भितत्वादनेकपदार्थसंसर्गबोधकत्वाच्च वाक्यस्य ।**

---

पदं भवति । ग्रामं गच्छतीत्यत्र प्रकृत्यर्थो ग्रामः, प्रत्ययार्थ आश्रयः, प्रकृतिर्गम्, तदर्थः संयोगानुकूलो व्यापारस्तिप्प्रत्ययस्तदर्थः कर्त्ता, तद्भेदबोधकत्वेन ग्राममित्यस्य गच्छतीत्यस्य पदत्वं तत्संसर्गो ग्रामप्रतियोगिकाश्रयानुयोगिकाभेदसंसर्गः, आश्रयप्रतियोगिकसंयोगानुपयोगिकनिष्ठत्वसंसर्गः, संयोगप्रतियोगिकव्यापारानुपयोगिकोऽनुकूलत्वसंसर्गः, तिबर्थाश्रयप्रतियोगिकव्यापारानुयोगिकवृत्तित्वसंसर्गः तद्बोधकत्वेन ग्रामं गच्छतीत्यस्य वाक्यरूपता, तत्कृतः प्रमाणभावः प्रमाणत्वं शब्दस्य पदार्थप्रत्यायकत्वेन न शब्दस्य प्रामाण्यम्, तथासति पदार्थस्यापूर्वत्वाभावेन शब्दस्य पदार्थसंस्कारोद्बोधकतया स्मृतावुपयोगापत्तेः । तत्त्वमसीत्यस्मादपि तत्पदार्थंजगत्कारणसत्यसङ्कल्पनिखिलहेयप्रत्यनीककल्याणगुणैकतान् सूक्ष्मचिदचिद्विशिष्टब्रह्मस्मृत्या त्वंपदार्थस्थूलचिदचिद्विशिष्टब्रह्मस्मृत्या च असत्पदार्थसत्तानुकूलव्यापारस्मृत्या च तिप्पदार्थकर्तृस्मृत्या च जगत्कारणसत्यकामसत्यसङ्कल्पनिखिलहेहप्रयत्नीककल्याणगुणैकतान् सूक्ष्मचिद्चिद्विशिष्टब्रह्मप्रकारकाभेदसंसर्गकस्थूलचिदचिद्विशिष्टब्रह्मविशेष्यकतत्प्रकारककर्तृविशेष्यकाभेदसंसर्गकतत्प्रकारकसत्तानुकूलव्यापारविशेष्यकवृत्तित्वसंसर्गकबोध उत्पद्यते, तेन तत्त्वमसीति वाक्यस्य प्रामाण्यम्, तस्माच्छब्दस्य निर्विशेषवस्तुबोधनासामर्थ्यान्न निर्विशेषवस्तुनि प्रमाणम्, निर्विशेषशब्देन प्रतीयमानोऽप्यर्थो न निर्विशेषरूपः, तथा हि विशेषान्निष्क्रान्तो निर्विशेषस्तत्र समस्तविशेषमुक्तिपरत्वं न सम्भवति, समस्तविशेषनिषेधानुपपत्तेरित्यकामेन भवता केनचिद्विशेषेणावगतस्य विशेषान्तरनिषेधस्तेन शब्देनावगन्तव्य इति न तेनापि निर्विशेषवस्तुसिद्धिः, इत्याह—केनचिद् विशेषेणेत्यादि वाक्यस्येत्यन्तेन ग्रन्थेन ।

यत्तु निर्विशेषपदार्थः प्रमितोऽप्रमितो वा, प्रमितत्त्वे निषेधवैयर्थ्यम्, प्रमितस्य सत्यस्य निषेधायोगात् । अप्रमितश्चेन्नेतरां निषेधोऽसत्यस्य शशशृङ्गवन्निषेधानुपपत्तेः । तदपि न दर्शनेषु पूर्वपक्षग्रन्थे तथा विकल्पग्रासस्य सम्भवात् । वस्तुतस्तु पूर्वपक्षग्रन्थेन प्रतीतिर्जायते, बाधज्ञानस्य शाब्दबोधे प्रतिबन्धकत्वानङ्गीकारात्, अप्रामाण्यग्रहहेतुत्वाच्च । उत्तरपक्षेण प्रमितिजनकत्वं निरस्यते, न प्रतीतिजनकत्वम्, तथा निर्विशेषशब्दात्प्रतीतिर्भवति, न प्रमितिः । प्रतीतिस्तु मम माता वन्ध्या, पिपीलिकाकर्णकुहरे हस्तिशतं नृत्यतीति वाक्याभ्यामपि भवति । विशिष्टाद्वैतवादिना तु वस्त्वन्तरावगतविशेषनिषेधबोधकतया प्रमाजनकत्वमपि स्थापितम् ।

अथ स्यात् नास्माभिर्निर्विशेषब्रह्मणि स्वयंप्रकाशे वस्तुनि शब्दः प्रमाणमित्युच्यते, स्वतःसिद्धस्य प्रमाणानपेक्षत्वात् सर्वैः शब्दैस्तदुपरागविशेषा-ज्ञातृत्वादयः सर्वे निरस्यन्ते, सर्वेषु विशेषेषु निवृत्तेषु वस्तुमात्रमनवच्छिन्नं स्वयंप्रकाशं स्वत एवावतिष्ठत इति, नैतदेवम् । केन शब्देन तद्वस्तु निर्दिश्य तद्गता विशेषा निरस्यन्ते, ज्ञप्तिमात्रशब्देनेति चेन्न, सोऽपि सविशेषमेव वस्त्ववलम्बते, प्रकृतिप्रत्ययरूपेण विशेषगर्भितत्वात्तस्य । 'ज्ञा अवबोधने' इति सकर्मकः सकर्तृकः क्रियाविशेषः क्रियान्तरव्यावर्त्तक-स्वभावविशेषश्च प्रकृत्याऽवगम्यते, प्रत्ययेन लिङ्गसंख्यादयः । स्वतः सिद्धावपि एतत्स्वभावविरहे सिद्धिरेव न स्यात् । अनन्यसाधनस्वभावतया

---

अथ स्यान्निर्विशेषवस्तुनि पूर्वोक्तयुक्त्या प्रमाणाभावो नास्माभिर्मिथ्यावादि-भिर्निर्विशेषे विशेषरहिते स्वयंप्रकाशेऽनन्यप्रकाशे शब्दस्य प्रकाशकतोच्यते, अनन्य-प्रकाशे अन्यशब्दप्रकाश्यत्वेनावगतिर्भ्रम एव । स्वतःसिद्धस्य प्रमाणानपेक्षत्वात् स्वतः-सिद्धातिरिक्तप्रमाणानपेक्षत्वात् । न च ब्रह्मणो हि प्रमाणनिरपेक्षत्वे तत्सिद्धयर्थे वेदान्तारम्भो विफल इति वाच्यम् , ज्ञानमात्रादिशब्देन ज्ञातृत्वादिविशेषा निरस्यन्ते वेदान्तशब्देन । इत्थं विशेषेषु निवृत्तेषु स्वरूपं स्वतःसिद्धमित्यभ्युपगमात् तद्वस्तु-मात्रमनवच्छिन्नं देशकालवस्तुपरिच्छेदरहितं स्वयंप्रकाशञ्च । नैतदेवं केन शब्देन ब्रह्म निर्दिश्य विशेषा निरस्यन्ते ? किञ्चिदुद्दिश्यैव विशेषनिषेधविधिः सम्भवति । वेदान्तानाम-पूर्वे विशेषनिषेधे तात्पर्यावधारणात् । अनिर्दिश्यनिषेधे ब्रह्मणोऽपि स्वेतरव्यावृत्तत्वेन विशेषतया तस्यापि निषेधापत्तौ ब्रह्मापि निषिद्धं स्यात् । ज्ञप्तिमात्रशब्देन निर्दिश्य इति चेन्न, सोऽपि स्वविशेषमेव वस्तु विषयीकरोति प्रकृतिर्ज्ञप् प्रत्ययक्तिरूपेण विशेषगर्भित-त्वाद् विशेषविशिष्टत्वाद् 'ज्ञप् ज्ञाने' इति सकर्मकः कर्मान्वितस्वार्थबोधकः सकर्तृकः सकर्तृकः कर्त्रान्वितस्वार्थः क्रियाविशेषः साध्यतया प्रतीयमानोऽन्तःकरणविषया-कारवृत्तिविशेषः क्रियान्तरपाकादिजडव्यावर्तकस्वभावविशेषश्च प्रकृत्याऽवगम्यते । प्रत्ययेन स्त्रित्वं संख्यैकत्वञ्च प्रतीयते । न च ज्ञानज्ञप्तिशब्दयोः नपुंसकत्वस्त्रित्वे साधुत्वमात्रप्रयोजने न विशेषरूपाधायक इति वाच्यम्, देवेश्वरपुरुषोत्तमादिशब्दानां लिङ्गस्यार्थवत्वात् पुरुषोत्तमार्थान्वितत्वाद् ज्ञानस्य स्वतःसिद्धिरपि सकर्तृकत्व-सकर्मकत्वस्वभावाधीना, तत्स्वभावविरहे सिद्धिरेव न स्यात्, प्रमाणमेव न स्यात्, ज्ञानस्य स्वभावोऽयं परप्रकाशकत्वमहमर्थकर्तृसम्बन्धित्वं स्वप्रकाशेऽन्यानपेक्षत्व-मन्यप्रकाशकानपेक्षत्वसमानाधिकरणस्वप्रकाश्यत्वञ्च । एतत्स्वभावविरहे स्वतःसिद्धत्वं स्वयंप्रकाशत्वं न घटते । ज्ञानस्य निर्विशेषत्वस्वीकर्तुरयमेको दोष इत्याह—अनन्य-स्वभावतया हि ज्ञप्तेः स्वतःसिद्धिरुच्यते । ज्ञातुरात्मनोऽहमर्थस्य विषये घटादौ व्यवहारः

हि ज्ञप्तेः स्वतःसिद्धिरुच्यते, ब्रह्मस्वरूपं कृत्स्नं सर्वदा स्वयमेव प्रकाशते च। न तस्मिन्नन्यधर्माध्यासः सम्भवति। न हि रज्जुस्वरूपेऽभावसमाने सर्पत्वादिरध्यस्यते, अत एव हि भवद्भिराच्छादिका अविद्याभ्युपगम्यते। ततश्च शास्त्रीयनिवर्त्तकज्ञानस्य ब्रह्मणि तिरोहितांशो विषयः। अन्यथा तस्य निवर्त्तकत्वं न स्यात्, अधिष्ठानातिरेकिरज्जुत्वप्रकाशनेन हि सर्पत्वं बाध्यते। एकश्चेद् विशेषो ज्ञानमात्रे वस्तुनि शब्देनाभिधीयते, स च ब्रह्म-विशेषणं भवति, इति सर्वश्रुतिप्रतिपादितसर्वविशेषणविशिष्टं ब्रह्म भवति। अतः प्रामाणिकानां न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः।

निर्विकल्पकप्रत्यक्षेऽपि सविशेषमेव वस्तु प्रतीयते, अन्यथा सवि-कल्पके सोऽयमिति पूर्वावगतप्रकारविशिष्टप्रत्ययानुपपत्तेः, वस्तुसंस्थान-

---

प्रकाशत इति व्यवहारः। तत्र स्वसम्बन्धो हेतुः, स्वस्मिन् ज्ञानस्वरूपे प्रकाशत इति व्यवहारे स्वयं हेतुरिति स्वभावेन ज्ञप्तेः स्वतःसिद्धिः कथ्यते।

अथ ब्रह्मस्वरूपं कृत्स्नं सर्वदा स्वयमेव प्रकाशते। परप्रकाशकानपेक्षं प्रकाशते चेत्, न तस्मिन्नन्यधर्माध्यासः सम्भवति। स्वयंप्रकाशे जाग्रति कुतो हि अन्यधर्मस्य स्वयंप्रकाशावृत्तिधर्मस्य ज्ञातृत्वादेरारोपः। नहि रज्जुस्वरूपेऽवभासमाने तत्र सर्पादि-रध्यस्यते। अत एव भवद्भिराच्छादिकाऽविद्याऽभ्युपगम्यते। स्वयंप्रकाशेऽज्ञातांशः कश्चित् तिष्ठति, न ह्याच्छाद्याभावे आच्छादनं सम्भवति, येनाविद्याच्छादकत्वमुपपद्येत। निवर्तकं पुरोवर्तिमात्रविषयकं ज्ञानं नोत्पद्यते; अपि तु स्वयंप्रकाशेऽज्ञातांशविषयक-ज्ञानमेवोत्पद्यते। अज्ञातांश एव निवर्तकज्ञानविषयोऽतः स्वयंप्रकाशे कश्चिद् विशेष-धर्मः स्वीकर्तव्यो योऽविद्यातिरोहितः शास्त्रेणावगतोऽविद्याध्यासं निवर्तयति। अवगतं रज्जुत्वं सर्पभ्रममिव इत्याह—ततश्च शास्त्रीयनिवर्तकज्ञानस्येत्यादि सर्पत्वं बाध्यत इत्यन्तेन मूलेन। एकश्चेद् विशेषो ज्ञानमात्रे वस्तुनि शब्देनाभिधीयते। शास्त्रजन्य-निर्वतकज्ञानविषयीभूत एकश्चेद् विशेषः शब्देन वेदान्तेन बोध्यते। तद्विशेषणं भवतीति सर्वश्रुतिप्रतिपादितसर्वविशेषणसर्वज्ञत्वादिविशिष्टं ब्रह्म भवति। इत्थं तिरोधा-ननिवर्तकत्वानुपपत्त्या विशेषस्वीकारापत्तिर्मिथ्यावादेऽतः प्रामाणिकानां प्रमाणपर-तन्त्राणां न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः।

बौद्धमायावादिनो निर्विकल्पकप्रत्यक्षं सर्वविशेषशून्यविषयकं वदन्ति, तेन निर्विशेषस्य ब्रह्मणो निर्विकल्पकप्रत्यक्षविषयत्वं स्यादिति निर्विशेषवस्तुभानासिद्धिः कथमिति, तत्रोच्यते सर्वं ज्ञानमिदमित्थमित्याकारं भवति। इदमिति धर्म्युल्लेख इत्थ-

विशेषरूपत्वाद् गोत्वादेर्निर्विकल्पकदशायामपि ससंस्थानमेव वस्त्वित्थमिति प्रतीयते। द्वितीयादिप्रत्ययेषु तस्यैव संस्थानविशेषस्यानेकवस्तुनिष्ठतामात्रं प्रतीयते, संस्थानरूपप्रकाराख्यस्य पदार्थस्यानेकवस्तुनिष्ठतयाऽनेकवस्तुविशेषणत्वं द्वितीयादिप्रत्ययावगम्यमिति द्वितीयादिप्रत्यया-स्सविकल्पका इत्युच्यन्ते।

---

मिति विशेषोल्लेखस्तस्मात् प्रकारविशेषविशिष्टविषयकमेव ज्ञानं भवति, तथा निर्विकल्पकप्रत्यक्षमपि। केचिन्नैयायिका जातिगुणक्रियादीनां द्रव्येभ्यः पृथग्ग्रहणं निर्विकल्पकप्रत्यक्षं परस्परसम्बन्धं विना वदन्ति, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्। तदपि न सम्बन्धं विना एकेन्द्रियग्राह्यजात्यादिद्रव्ययोरुपलम्भस्याभावात् पृथग् ग्रहणे दण्डादिना पृथग्ग्रहणपूर्वकविशिष्टग्रहणानुभवो बीजञ्च वाच्यम्, तत्र पृथग् दण्डादि ग्रहणस्यासम्बन्धप्रयुक्तत्वात्। सम्बन्धावस्थायां तु विशिष्टग्रहणस्यैवानुभवात्।

यद्यपि गन्धस्य गुणस्य पृथिव्याः पृथग्ग्रहणमनुभूयते, तथापि नियमेन सम्बन्धिनामेकसामग्रीग्राह्याणां जात्यादिविशिष्टव्यक्तीनां पृथग्ग्रहणं न। निर्विकल्पकसविकल्पकव्यवहारश्चेत्थं जात्यादिविशिष्टप्रथमपिण्डग्रहणं निर्विकल्पकम्, जात्यादिविशिष्टद्वितीयादिपिण्डग्रहणं सविकल्पकम्, निर्विकल्पकप्रत्यक्षस्य सविशेषविषयत्वाभावे सविकल्पके सोऽयमिति पूर्वावगतप्रकारविशिष्टप्रत्ययानुपपत्तेः। तच्छब्देन पूर्वावगतजात्यादिविशिष्टं वस्तु परामृश्यते। न च प्रथमपिण्डग्रहणेऽनेकव्यक्तिसम्बन्धरूपानुवृत्तेरज्ञानाद् जात्यभानमिति वाच्यम्, जातेरनुवृत्तिरूपत्वानङ्गीकारात्। जातिरनुवृत्त्यवस्थायां वस्तुसंस्थानविशेषरूपा न पदार्थान्तरं यस्याः पिण्डेन सह ग्रहणासम्भवः, प्रथमो योगोपिण्डस्तद् ग्रहणवेलायाम् अयमपि पक्षास्ति ग्रहणवेलायां ससंस्थानमेव वस्त्वित्थमिति प्रतीयते, द्वितीयादिपिण्डग्रहणे तस्य संस्थानस्यानेकव्यक्तिनिष्ठताऽनेकव्यक्तिसम्बन्धस्तन्मात्रं प्रतीयते। संस्थानस्य प्रकारस्यानेकवस्तुविशेषणत्वं द्वितीयादिप्रत्ययगम्यमिति द्वितीयादिप्रत्ययानां सविकल्पकत्वम्, यत्तु कतिपयविशेषविशिष्टव्यक्तिग्रहणं निर्विकल्पकं कतिपयविशेषाग्रहणञ्च। अनेकविशेषणविशिष्टगोपिण्डग्रहणं सविकल्पकमिति, तन्न भेदकं सविकल्पकेऽपि कतिपयविशेषाग्रहणात्। अनेकव्यक्तिसम्बन्धितया संस्थानादि ग्रहणाग्रहणेऽपि न भेदके संस्कारप्रमोषवतः पुरुषस्य द्वितीयादिपिण्डग्रहणेऽपि अनेकव्यक्तिसम्बन्धितायाः संस्थानेष्वग्रहणादिति, तन्न, द्वितीयादित्वेन द्वितीयादिग्रहणस्य विवक्षितत्वात् केषुचिद्द्वितीयादिपिण्डेषु अनुवृत्ताकारताग्रहणेनादोषात्। अत्रायं वस्तुतस्त्वभिप्रायो निर्विकल्पकप्रत्यक्षं केवलेन्द्रियजन्यं जातिविशिष्टव्यक्तिविषयकं सविकल्पकं प्रथमानुभवजन्यजातिसंस्कारसचिवेन्द्रियजन्यम्, अयमपि गौरित्याकारमिति परस्परभेदः।

अत एवैकस्य पदार्थस्य भिन्नाभिन्नरूपेण द्व्यात्मकत्वं विरुद्धं प्रत्युक्तं संस्थानस्य संस्थानिनः प्रकारतया पदार्थन्तरत्वम्, प्रकारत्वादेव पृथक्-सिद्ध्यनर्हत्वं पृथगनुपलम्भश्चेति न द्व्यात्मकत्वसिद्धिः।

अपि च निर्विशेषवस्तुवादिना स्वयंप्रकाशे वस्तुनि तदुपरागविशेषाः शब्दैः सर्वैः निरस्यन्त इति वदता के ते शब्दा निषेधका इति वक्तव्यम्, वाचा-रम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति विकारनामधेययोर्वाचा-रम्भणमात्रत्वाद् यत्तत्र कारणतयोपलक्ष्यते, वस्तुमात्रं तदेव सत्यमन्यदसत्य-

---

अत एवेति। प्रकारविशेष्यभावस्य भेदकत्वादेव एकस्य गोपदार्थस्य गोव्यक्ते-र्जातिभेदतद्भेदरूपेण द्व्यात्मकत्वं विरुद्धम्, अर्थाद् उभयरूपत्वमेकाधिकरणा वृत्तिः। संस्थानस्य जातेः संस्थानिनो व्यक्तेः नियतप्रकारतया 'अयं गौः' इति प्रतीतौ संस्थानस्य व्यक्तेश्च पदार्थान्तरत्वम्, अन्यपदार्थत्वं विषयः, प्रकारविशेष्यभावस्य परस्परभेद-नियामकत्वात्। व्यक्तौ प्रकारतया भासमानत्वादेव व्यक्तिं विना अन्यत्रानुपलम्भादेव पृथक् सिद्ध्यनर्हत्वं पृथगनुपलम्भश्च व्यक्तेः पृथग्जातेः सत्ताभावः पृथक्प्रतिपत्त्यभावश्च। यत्तु एकस्य भेदाभेदवत्वे चत्वारो हेतव उपन्यस्तास्ते हेत्वाभासाः, तथा हि जाति-व्यक्त्योः सहोपलम्भात्तयोर्भेदाभेदौ अयं गौरिति इदमर्थव्यक्तिगोपदार्थजात्योरभेद-बोधकसमानविभक्तिकत्वात्, सामानाधिकरण्यादेकार्थबोधकत्वात्, एकानुविद्धप्रत्य-यात्। अयमेको गौरिति जातिव्यक्त्योरेकत्वावगाहिप्रत्ययात्, प्रथमपिण्डग्रहण-प्रथम-गोपिण्डग्रहणे अपरव्यक्तेरभावेन भेदकाकाराग्रहणात्, अयं गौरिति अभेदप्रतिपत्तिश्च। भेदप्रतिपत्तिरनेकव्यक्तिसत्तायां वर्तमानायां व्यक्तौ व्यावृत्तिप्रत्ययः, प्रतिव्यक्तिपरस्पर-भेदप्रत्ययः, जातौ अनुवृत्तिप्रत्ययः, अयमपि गौरयमपि गौरित्याकार इति प्रतीतिर्भेद-निबन्धना सोऽत्र नेत्यर्थः। तत्रैकेन्द्रियवेद्यत्वात् पृथक्सिद्ध्यनर्हत्वात् सहोपलम्भो न च सोऽभेदप्रयुक्तः सामानाधिकरण्यम् अयं गौरिति। न हि जातिव्यक्त्यभेदनिबन्धनम्, किन्तु गोत्वजातिविशिष्टभेदनिबन्धनम्, अपृथक्सिद्धविशेषणवाचकशब्दस्य विशेष्यपर्यन्त-बोधकत्वात्। अयमेको गौरिति एकानुविद्धप्रत्ययश्च न जातिव्यक्त्येकत्वविषयः; अपि तु एकव्यक्तिविषयकः। अनुवृत्तिव्यावृत्तिग्रहेणैव न भेदप्रत्ययः; अपि तु विशेष्यविशेषण-भावोऽपि भेदकः संस्थानस्येत्थमिति प्रतीतिविषयत्वम्, संस्थानिनोऽयमिति प्रतीति-विषयत्वमिति जातिव्यक्त्योर्भेदसिद्धिः। अयं गौरिति प्रथमपिण्डग्रहण उभयं भासते।

पूर्वं वेदान्तवाक्यानां भेदनिरासपरत्वाभ्युपगमेऽपि ब्रह्मणः केनचिच्छब्देन निर्देश्य-त्वात्, सविशेषविषयत्वात्, शब्दस्य प्रकृतिप्रत्यययोगेन विशेषगर्भितत्वात्, स्वप्रकाश-त्वाज्ज्ञानस्य परप्रकाशकत्वविशिष्टस्वप्रकाशत्वाहमर्थात्मवृत्तित्वविशिष्टरूपत्वाच्च। ब्रह्मवृत्तिकिञ्चिद्धर्मतिरोधानशास्त्रजन्यज्ञानाध्यासनिवृत्तिभ्यां सविशेषत्वं स्थापितम्,

मितीयं श्रुतिर्वदतीति चेत्, नैतदुपपद्यते, एकस्मिन् विज्ञाते सर्वं विज्ञातं भवतीति प्रतिज्ञाते अन्यज्ञानेनान्यज्ञानासम्भवं मन्वानस्यैकमेव वस्तुविकाराद्यवस्थाविशेषेण पारमार्थिकेनैव नानारूपमवस्थितं चेत्, तत्रैकस्मिन् विज्ञाते तस्माद्विलक्षणसंस्थानान्तरमपि तदेव वस्त्विति तत्र दृष्टान्तोऽयं निर्दशितः। नात्र कस्यचिद्विशेषस्य निषेधकः कोऽपि शब्दो दृश्यते। वाचारम्भणमिति। वाचा व्यवहारेण आरभ्यत इति आरम्भणम्, पिण्डरूपेणावस्थिताया मृत्तिकाया नाम चान्यत् व्यवहारश्चान्यः। घटशरावादिरूपेणावस्थितायास्तस्या एव मृत्तिकाया अन्यानि नामधेयानि व्यवहाराश्चान्यादृशाः। तथा हि सर्वत्र मृत्तिकाद्रव्यमेकमेव नानासंस्थाननानानामधेयाभ्यां नानाव्यवहारेणारभ्यत इत्येतदेव सत्यमित्यनेनान्यज्ञाने नान्यज्ञान-

---

अथ वेदान्तवाक्यानां भेदनिरासपरत्वमेव न सम्भवि इत्युच्यते—अपि चेत्यादिना। निर्विशेषवस्तुवादिना मायावादिना स्वयंप्रकाशे वस्तुनि परकृतप्रकाशानपेक्षे अविद्यातिरोधेयधर्मरहिते उपरागविशेषा आरोपितधर्माः सर्वैः शब्दैः निरस्यन्त इति वदता के ते शब्दा निषेधका इति वक्तव्यम्, अर्थात् के ते निषेधका इति प्रष्टव्यस्योत्तरमशक्यं सद्विद्याया निर्विशेषपरत्वन्तु वारितम्, अथ भेदनिरासपरत्वमाशङ्क्य निराक्रियते।

ननु वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यत्र विकारघटशरावाद्याकृतिविशेषाणां घटशरावादि नामधेयानां शब्दानां वाचा शब्दभेदैर्घटशरावादिभिरारम्भणमारभ्यमाणं श्रोतृबुद्धावुत्पद्यमानं बाह्य न किञ्चित् पारमार्थिकं मृत्तिकेत्येव सत्यमिति श्रुत्या भेदनिषेधदृष्टान्तेन सदेव सोम्येदमग्र आसीदिति श्रुत्यापि देवमनुष्यादि विकारजातस्यासत्यत्वमिति कारणतया लक्षितं यद्वस्तुमात्रं तदेव सत्यमन्यज्जगदसत्यमिति चेन्न, एकविज्ञानेन सर्वविज्ञाने प्रतिज्ञाते अन्यविज्ञानेनान्यविज्ञानासम्भवं मन्वानस्य श्वेतकेतोः एकमेव वस्तुविकाराद्यवस्थाविशेषैः कार्यकारणावस्थाविशेषैः पारमार्थिकैः सत्यैः नानारूपमवस्थितं चेत्, तत्रैकस्मिन् परिणामिनि विज्ञाते तस्मात् परिणामिनो विलक्षणसंस्थानान्तरमपि परस्परविलक्षणान्यान्यसंस्थानशाल्यपि तदेव परिणाम्येव वस्त्विति दृष्टान्तो निर्दशितः। नात्र कस्यचित् कश्चिन्निषेधकोऽस्ति। वाचारम्भणपदार्थो न पूर्वोक्तः; किन्तु वाचा व्यवहारेण आरभ्यते क्रियते यत्तद् वाचारम्भणं घटादिविकारो घटशरावादिनामधेयञ्च जलाद्याहरणादिव्यवहाररूपफलाय नामधेयं घटादिविशेषार्थबोधनद्वारा प्रवृत्तिनिवृत्तिसम्पादनाय वाचेत्यत्राध्ययनेन वसतीत्यत्रेव फले तृतीया पिण्डमृत्पिण्डरूपेणावस्थिताया मृत्तिकाया नाम चान्यद् व्यवहारश्चान्यः। मृत्तिकाव्यवहारो नाम वेदिनिर्माणादि हस्तपात्रमार्जनादि। मृत्तिकाशब्दप्रयोगश्च नाम मृत्तिकेत्यानुपूर्वी-

सम्भवो निर्दशितो नात्र किञ्चिद्वस्तु निषिद्धयत इति पूर्वमेवायमर्थः प्रपञ्चितः ।

अपि च "येनाश्रुतं श्रुतम्" इत्यादिना ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वं प्रतिज्ञातं चेत्, "यथा सोम्यैकेन मृत्पिण्डेन" इत्यादि दृष्टान्तश्च साध्यविकलः स्यात् । रज्जुसर्पादिवन्मृत्तिकाविकारस्य घटशरावादेर-सत्यत्वं श्वेतकेतोः शुश्रूषोः प्रमाणान्तरेण युक्त्या चासिद्धमिति । एतदपि सिषाधयिषितमिति चेत्, यथेति दृष्टान्ततयोपादानं न घटते । "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यत्र सदेवैकमेवेत्यवधारणद्वयेना-द्वितीयमित्यनेन च सन्मात्रातिरेकिसजातीयविजातीयाः सर्वे विशेषा निषिद्धा इति प्रतीयत इति चेत्, नैतदेवम्, कार्यकारणभावावस्थाद्वया-

---

विशिष्टं घटशरावादिरूपेणावस्थितायास्तस्या मृत्तिकाया अन्यानि नामधेयानि घटशरावादीनि व्यवहाराश्चान्यादृशम्, जलाहरणकलशस्थापनपञ्च गव्याङ्गदध्यादि-स्थापनपञ्चामृताङ्गदध्यादिस्थापनरूपाः, घटाद्यर्थविषयकप्रवृत्तिनिवृत्तिफलकघटादि-शब्दप्रयोगरूपाः । तथापि तत्र सर्वत्र मृत्तिकाद्रव्यमेकमेव नानासंस्थानभिन्नाकृति-विशेषभिन्ननामधेयाभ्यां नानाव्यवहारेणारभ्यते, नानाव्यवहाराय सम्बध्यते, नाना-कृतिनामधेयान्वितं भवति, इत्येतदेव सत्यमित्यनेनान्यज्ज्ञानेन घटशरावादिकारणत्वे-नैकमृत्तिकाज्ञानेन सर्वे घटशरावादि मृदात्मकमिति ज्ञातं भवति । नात्र किञ्चिद्वस्तु निषिध्यते इति न कस्यचिच्छब्दस्य निषेधपरत्वमिति सिद्धम् ।

प्रपञ्चो मिथ्या, ब्रह्मकारणश्रवणादिना तस्य श्रुतत्वादित्यस्य बोधितत्वात् । इत्थं येनाश्रुतमित्यादिना ब्रह्मव्यतिरिक्तप्रपञ्चस्य मिथ्यात्वं प्रतिज्ञातञ्चेत्, घटशरावादि दृष्टान्तसाध्यविकलो मिथ्यात्वविकलः स्यात् । तत्र घटादौ मृदुपादानकत्वस्य प्रमित-त्वेऽपि मिथ्यात्वस्याभावान्नहि तदानीं श्वेतकेतोः केनापि प्रमाणेन मिथ्यात्वं निर्णीत-मस्ति, येन घटशरावादि दृष्टान्तरूपतामाश्रयेत । यदि घटादावपि मिथ्यात्वं सिषाधयिषितम्, तदा यथा सोम्येत्यत्र यथापदस्य दृष्टान्तत्वसमर्पकस्य स्वारस्य-भङ्गापत्तिः, इत्याह मूले—रज्जुसर्पादिवन्मृत्तिकाविकारस्य घटशरावादेरसत्यत्वं श्वेतकेतोः शुश्रूषोः प्रमाणान्तरेण प्रत्यक्षेण युक्त्या चासिद्धम्, व्यावर्तमानत्वं तु दुष्टम्, सत्यपि तस्मिन् घटपटादिषु मिथ्यात्वस्याभावात् ।

न च सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यत्र सदेव घटकेन एकमेवेत्यत्र वर्तमानेनैव द्वयेनाद्वितीयपदेन च सजातीयभेदः ब्रह्मजातीयान्यभेदो विजातीयभेदो

वस्थितस्यैकस्य वस्तुन एकावस्थावस्थितस्य ज्ञानेनावस्थान्तरावस्थितस्यापि वस्त्वैक्येन ज्ञाततां दृष्टान्तेन दर्शयित्वा श्वेतकेतोरप्रज्ञातं सर्वस्य ब्रह्मकारणत्वं च वक्तुं सदेव सोम्येदमित्यारब्धम् । इदमग्रे सदेवासीदिति अग्र इति कालविशेषः, इदंशब्दवाच्यस्य प्रपञ्चस्य सदापत्तिरूपां क्रियां सद्द्रव्यतां च वदति, एकमेवेति चास्य नानानामरूपविकारप्रहाणम् । एतदस्मिन् प्रतिपादितेऽस्य जगतस्सदुपादानता प्रतिपादिता भवति । अन्यत्रोपादानकारणस्य स्वव्यतिरिक्ताधिष्ठात्रपेक्षादर्शनेऽपि सर्वविलक्षणत्वादस्य सर्वज्ञस्य ब्रह्मणः सर्वशक्तियोगो न विरुद्ध इति अद्वितीयपदमधिष्ठात्रन्तरं वारयति ।

---

ब्रह्मावृत्तिजातीयान्यभेदः स्वगतब्रह्मगतगुणगणभेदश्चेमे सर्वे भेदा निषिद्धा इति प्रतीयत इति वाच्यम् । कार्यकारणावस्थावस्थितस्यैकस्य वस्तुनो मृदावस्था-घटावस्थावस्थितस्यैकस्य मृद एकावस्था मृदावस्थावस्थितस्य सतो ज्ञानेनावस्थान्तरावस्थितस्यापि घटाद्यवस्थान्तरेणावस्थितस्यापि वस्त्वैकत्वेन सर्वत्रैकमृत्त्वेन ज्ञाततां दृष्टान्तेन दर्शयित्वा वादिप्रतिवादिनिर्णीतरूपेण प्रदर्श्य श्वेतकेतोरप्रज्ञातं सर्वब्रह्मकारणत्वं सर्वजगत्कारणत्वं वक्तुं सदेवेत्याद्यारब्धम् । अतो यथादृष्टान्तं दार्ष्टान्तिकं व्याख्येयम्, तथा हि सदेवेदमग्र एकमेवासीत्, तत्र इदमग्रे सदेवासीदिति । 'अग्रे इति कालविशेषम्, इदंशब्दवाच्यस्य प्रपञ्चस्य सदापत्तिरूपां क्रियां सद्द्रव्यताञ्च वदति आसीदिति । निरुक्तक्रियां सदेवेति । प्रपञ्चसद्रूपतां कारणावस्थायामाह—एवकारो हि तार्किकाभिमतां कार्यस्योत्पत्तेः प्रागसद्रूपतां निषेधति । सद्रूपवत्वेऽवगते फलितमाह—एकमेवेति । पूर्वमविभक्तनामरूपमासीत् । तदाह—नानानामरूपप्रहाणं नामरूपविभागप्रहाणं वदतीति शेषः । एतस्मिन्प्रतिपादिते विभक्तनामरूपवत्वेन भविष्यतोऽविभक्तनामरूपवत्वे चोक्ते भाव्यवस्थाविशेषवतः प्रागवस्थायोग उपादानत्वमिति लक्षणादुपादानत्वमुक्तमित्याह—एतस्मिन् प्रतिपादितेत्यादिना ।

अद्वितीयपदप्रयोजनं विवक्षुराह—अन्यत्रेति । अन्यत्र घटादौ, उपादानकारणस्य स्वव्यतिरिक्ताधिष्ठात्रपेक्षत्वेऽपि सर्वविलक्षणत्वात्—चराचरजगद्विलक्षणत्वाद् अस्य सर्वज्ञस्य सर्वशक्तियोगो न विरुध्यते । समस्तकार्यानुकूलधर्मवत्वं सकलोपादानविशेषविषयकापरोक्षज्ञानवत्वे सत्येव घटत इति अद्वितीयपदमधिष्ठात्रन्तरं वारयति । एवं कालविशेषः सदापत्तिक्रियासद्द्रव्यरूपताऽविभक्तनामरूपत्वम् अधिष्ठात्रन्तरशून्यत्वञ्चेमे विशेषाः प्रतीयन्ते, क्व विशेषनिषेधकथागन्धः ।

सर्वशक्तियुक्तत्वादेव ब्रह्मणः काश्चन श्रुतयः प्रथममुपादानकारणत्वं प्रतिपाद्य निमित्तकारणमपि तदेवेति प्रतिपादयन्ति। यथेयं सदेवेति श्रुतिरन्याश्च श्रुतयो ब्रह्मणो निमित्तकारणत्वमनुज्ञाय अस्यैवोपादानतादि कथमिति परिचोद्य सर्वशक्तियुक्तत्वादुपादानकारणं तदितराशेषोपकरणं च ब्रह्मैवेति परिहरन्ति। "किंस्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निसृतक्षुः। मनीषिणो मनसा पृच्छते दुतद्यदध्यतिष्ठद् भुवनानि धारयन्। ब्रह्मवनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निसृतक्षुः मनीषिणो मनसा विब्रमीमि वो ब्रह्माद्यतिष्ठद् भुवनानि धारयन्" इति सामान्यतो दृष्टेन विरोधमाशङ्क्य ब्रह्मणः सर्वविलक्षणत्वेन परिहार उक्तः। अतः सदेव सोम्येदमग्र आसीदित्यत्राप्यग्र इत्याद्यनेकविशेषा ब्रह्मणः प्रतिपादिता भवदभिमतविशेषनिषेधवाचकः कोऽपि शब्दो न

---

लोकप्रसिद्धकार्याणां निमित्तोपादानसहकारिकारणानि भिन्नानि भवन्ति। अथ च ब्रह्मणश्चेतनस्य कारणत्वे प्राग् निमित्तकारणमेव वाच्यमथोपादानमिति संशयोच्छेदायाह—सर्वशक्तियुक्तत्वादिति। परिमितशक्तियुक्ते चेतन एष नियमः। एवं शक्तियुक्तत्वाद् ब्रह्मणः काचिच्छ्रुतिः प्रागजगदुक्त्वा तत्कारणं ब्रुवन्ति, उपादानमेव प्रथमं ब्रूते। अथ निमित्तकारणं यथा सद्विद्या काचिच्छ्रुतिर्जगन्निमित्तकारणं ब्रह्मावगत्य निमित्तोपादानसहकारिकारणानि भिन्नानि भवेयुरिति संशयमुत्थाप्य सर्वशक्तियोगेनैकस्यैव ब्रह्मणः कारणत्रयात्मकत्वमिति समादधाति, इत्याह—परिहरन्तीत्यन्तेन ग्रन्थेन। जगतो भिन्ननिमित्तोपादानादिकारणा शङ्कासमाधानश्रुतिरुच्यते। तथा हि किंस्विद्वनं जगन्निर्माणाधारकारणं किं वनस्याधिकरणपरत्वात् क उ स वृक्ष आसीत्? किं जगदुपादानकारणमासीत्? यतो द्यावापृथिवी निसृतक्षुः, यस्माद् द्युपृथिव्युपलक्षितं जगन्निर्ममे, काष्ठत्वेनाध्यवसितकारणजन्यत्वदृष्ट्या निसृतक्षुरिति। अत्र बहुत्वमविवक्षितम्, "अदितिः पाशान् प्रभुभोक्तु" इत्यत्र पाशानितिवत्। हे मनीषिणः! हे विद्वांसः! मनसा विचार्य इदमेव पृच्छत जिज्ञासध्वं भुवनानि धारयन्—भुवनधारणकर्ता कोऽस्ति? यः सहकारिकारणमध्यतिष्ठत्। अथोत्तरं ब्रह्म वनं ब्रह्म स वृक्षः, ब्रह्मैव जगन्निर्माणाधारः, ब्रह्मैव स वृक्ष उपादानकारणम् आसीत्, यतो द्यावापृथिवी तदुपलक्षितं जगद् निसृतक्षुर्निर्ममे। हे मनीषिणः! मनसा विचारेण विब्रवीमि विविच्य कथयामि, ब्रह्म भुवनधारणकर्तृसहकारिकारणमध्यतिष्ठत्, विज्ञानपूर्वकं जगन्निर्माणकर्माणि व्यापारितवान्।

दृश्यते, प्रत्युत जगद्ब्रह्मणः कार्यकारणभावज्ञापनाय अग्र इति कालविशेषसद्भाव आसीदिति च । क्रियाविशेषो जगदुपादानता जगन्निमित्तता च निमित्तोपादानयोर्भेदनिरसनेन तस्यैव ब्रह्मणस्सर्वशक्तियोगश्चेत्यप्रज्ञाताः सहस्रशो विशेषा एव प्रतिपादिताः ।

यतो वास्तवकार्यकारणभावादिज्ञापने प्रवृत्तमिदम् । अत एव असदेवेदमग्र आसीदित्यारभ्यासत्कार्यवादनिषेधः क्रियते । कुतस्तु खलु सोम्यैवं स्यादिति प्रागसत उत्पत्तिरहेतुकेत्यर्थः । तदेवोपपादयति कथमसतः सज्जायेतेति । असत उत्पन्नमसदात्मकमेव भवतीत्यर्थः। यथा मृद उत्पन्नं घटादिकं मृदात्मकं सत उत्पत्तिर्नाम व्यवहारविशेषहेतुभूतोऽवस्थाविशेषो योगः ।

---

इत्थं सामान्यतो दृष्टेन साधारणलोकप्रसिद्धकारणकार्यदर्शनेन निमित्तोपादानविरोधमेकस्मिन् आशङ्क्य ब्रह्मणः सर्वविलक्षणत्वेन विरोधपरिहार उक्तः, तदुक्तव्याख्यानस्य वास्तविकत्वादेव सदेव सोम्येदमग्र आसीदित्यत्राप्यग्र इत्याद्यनेकविशेषा ब्रह्मणः प्रतिपादिताः । भवदभिमतविशेषनिषेधकः कोऽपि शब्दो न विद्यते । न च विशेषणानि निषेधानुवादायेति वाच्यम्, प्रत्युत जगद्ब्रह्मणोः कार्यकारणभावज्ञापनाय अग्र इत्यादिना पूर्वकालादयो विशेषा उक्ताः ।

सद्विद्याप्रकरणं वास्तविककार्यकारणभावज्ञापनेन प्रवृत्तम्, सत्कार्यवादस्य वास्तविकत्वात् । एवं सति कार्यस्य जगतोऽसत्यत्वमनुपपन्नम्, सत्यत्वञ्चोपपन्नम् । सत्कार्यपक्षस्य श्रुत्यभिप्रेतत्वादेव असदेवेदमग्र आसीदित्यारभ्यासत्कार्यवादनिषेधश्च क्रियते । यत्तु असदेवेत्यादि प्रकरणं माध्यमिकपक्षनिक्षेपपरं तदनुपपन्नम्, असदेवेदमग्र इत्यग्रशब्देन कालविशेषे असत्त्वप्रतीतेः । नहि शून्यवादी कालविशेषे जगच्छून्यं ब्रवीति, नहि शून्यवादनिरासे नैकविज्ञानेन सर्वविज्ञानमिति प्रतिज्ञा सम्भवेत्, वैशेषिकमतनिरासे कार्यस्याग्रेऽपि सत्त्वसिद्ध्या कारणज्ञानेन सर्वज्ञानप्रतिज्ञानमुपपद्यते । माध्यमिकपक्षे कार्यकारणयोरसत्वमिति कथम् ? असतस्सज्जायेतेति कारणसत्त्वे हि कार्यसत्त्वमुच्यत इति न शून्यवादनिरासपरमिदं वाक्यम् । अतः क्षणिकवादनिरासपरमिदं वाक्यम् । यद् भास्करेण व्याख्यातम्, तदप्यनुपपन्नम्, कुतस्तु खलु सोम्यैवं स्यादिति असतस्सज्जायेतेति प्रागसत उत्पत्तिरहेतुका, तथा हि उत्पत्तिर्नाम अवस्थाविशेषः, तदाश्रयस्य द्रव्यस्य पूर्वमसत्त्वं चेन्निराश्रया उत्पत्तिः स्यादिति निर्हेतुका हेतुपदस्याश्रयपरत्वात् । तदेवोपपादयति—कथमसतस्सज्जायेतेति ? असत

एतदुक्तं भवति, एकमेव कारणभूतं द्रव्यमवस्थान्तरयोगेन कार्यमित्युच्यत इति एकविज्ञानेन सर्वविज्ञानं प्रतिपिपादयिषितम्, तदसत्कार्यवादे न सेत्स्यति। तथा हि निमित्तसमवाय्यसमवायिप्रभृतिभिः कारणैरवयवाख्यं कार्यं द्रव्यान्तरमेवारभ्यत इति कारणभूताद्वस्तुनः कार्यस्य वस्त्वन्तरत्वात् तज्ज्ञानेनास्य ज्ञातता कथमपि न सम्भवतीति। कथमवयविद्रव्यान्तरं निरस्यत इति चेत्, कारणगतावस्थान्तरयोगस्य द्रव्यान्तरोत्पत्तिवादिनः सम्प्रतिपन्नस्यैवैकत्वनामान्तरव्यवहारान्तरादेरुपपादकत्वाद् द्रव्यान्तरादर्शनाच्चेति कारणमेवावस्थान्तरापन्नं कार्यमित्युच्यत इत्युक्तम्।

---

उत्पन्नमसदात्मकमेव कथम्? असतस्सज्जायेतेति। अत्र सच्छब्दः जगदवस्थाविशिष्टपरः। विशेष्यं जगत्पूर्वमसच्चेद् विशेषणभूतजगत्त्वावस्थाया अभावः सुतराम्, एवंविशिष्टमपि असत् स्यात्। सत उत्पत्तिर्नाम व्यवहारहेतुभूतावस्थान्तरयोगः, सा सत्कार्यवाद एव पूर्वं विद्यमानस्यावस्थान्तरयोगो घटते। प्रागविद्यमानत्वे किमाश्रयोत्पत्तिरवस्थान्तरयोगः स्यात्।

एकमेव कारणभूतमुपादानभूतं द्रव्यं सूक्ष्मचिदचिद्ब्रह्मरूपमवस्थान्तरयोगेन नामरूपविभागार्हचेतनाचेतनावस्थान्तरकृततद्विशिष्टब्रह्मावस्थान्तरयोगेन कार्यमुच्यत इति सत्कार्यवादं मनसि कृत्यैकविज्ञानेन यथा ब्रह्मज्ञानेनावस्थान्तरयोगि तदेवेति विविधकार्यरूपतया परिणतं तज्ज्ञातं भवतीति सर्वविज्ञानप्रतिज्ञां करोति, तदसत्कार्यवादे कार्योत्पत्तेः पूर्वं कार्यमसदिति वादे न सेत्स्यति, न कारणज्ञानेन भिन्नकार्यज्ञानं सम्भवेत्। तथा हि प्रतिज्ञातमुपपादयति—युक्तिभिः साधयति, निमित्तकारणसमवाय्यसमवायिकारणैः संख्यापरिमाणभेदादवयविरूपं द्रव्यान्तरमेवारभ्यते, नहि अन्यज्ञानेन वस्त्वन्तरज्ञानं स्यात्।

अवयविद्रव्यान्तरनिरासश्चेत्थम्—द्रव्यान्तरोत्पत्तिवादिनस्तार्किकस्य द्रव्यान्तरकल्पकैकत्वं घटेति नामान्तरजलानयनादि व्यवहारादेरुपपादकत्वं मृत्कारणगतावस्थान्तरयोगस्यासमवायिकारणस्यावयवसंयोगस्य सम्प्रतिपन्नस्योभयसम्मतस्य, तस्माद् मृदतिरिक्तद्रव्यस्य घटादावनुपलम्भाच्च न द्रव्यान्तरत्वं यथैकस्य समाजस्यासनशयनगमनस्थानावस्थाकृता शेते इत्यादि बुद्धिः, शेते इत्यादि शब्दान्तरप्रयोगः, सर्वत्र समाजप्रत्यभिज्ञया न द्रव्यान्तरं कृतं बुद्धिशब्दभेदादि, घटपटयोस्तु परस्परं घटपट-

ननु निरधिष्ठानभ्रमासम्भवज्ञापनायासत्कार्यवादनिरासः क्रियते। तथा हि एकं चिद्रूपं सत्यमेवाविद्याच्छादितं जगद्रूपेण विवर्तत इति। अविद्याश्रयत्वाय मूलकारणं सत्यमित्यभ्युपगन्तव्यमित्यसत्कार्यवाद-निरासो नैतदेवमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञादृष्टान्तमुखेन सत्कार्य-वादस्यैव प्रसक्तत्वादित्युक्तम्, भवत्पक्षे निरधिष्ठानभ्रमासम्भवस्य दुरुप-पादत्वाच्च। यस्य हि चेतनगतदोषः पारमार्थिको दोषाश्रयत्वञ्च पार-मार्थिकं तस्य पारमार्थिकदोषेण युक्तस्यापारमार्थिकगन्धर्वनगरादिदर्शन-मुपपन्नम्। यस्य तु दोषश्चापारमार्थिको दोषाश्रयत्वञ्चापारमार्थिकम्, तस्यापारमार्थिकेनाप्याश्रयेण तदुपपन्नमिति भवत्पक्षे न निरधिष्ठानभ्रमा-सम्भवः।

---

प्रत्यभिज्ञाऽभावाद् द्रव्यान्तरकृतभेदो बुद्धिशब्दयोः। अतः कारणमेवावस्थान्तरं कार्य-मित्युच्यत इत्युक्तम्, तस्मात्कथमसतः सदिति वाक्येन न क्षणिकमतनिरासः; अपि तु वैशेषिकमतनिरासोऽभिप्रेतः।

शून्यात्कार्योत्पत्तौ जगदसदेव स्यादस्ति सदतः सतो जगदुत्पत्तिरिति सत्कार्यवाद औपनिषदो मायावादी-विवर्तवादी। स च निरधिष्ठानभ्रमासम्भवादविद्याश्रयभूतम्, चिन्मात्रमधिष्ठानमन्तरेण जगद्भ्रमासम्भव इति सृष्टेः प्राक् मूलकारणाविद्याश्रयत्वाय सत्यमङ्गीकार्यं नासत्। तेन शून्यवादो निरस्त इति, तन्न, एकविज्ञानेन सर्वविज्ञान-प्रतिज्ञा मृदादिदृष्टान्तद्वारा कार्यकारणाभेदवादि सत्कार्यवादस्यैव प्राप्तत्वात्। अपि च तव मते निरधिष्ठानभ्रमासम्भवो न घटते। यस्य पारमार्थिको दोषो दोषाश्रयत्वञ्च पारमार्थिकम्, तस्यापारमार्थिकगन्धर्वनगरादि दर्शनभ्रमः सम्भवति। यस्य दोषश्चा-पारमार्थिको दोषाश्रयत्वञ्चापारमार्थिकम्, तस्यापारमार्थिकेनाप्याश्रयेण भ्रमः सम्भवेत्। किमाश्रयस्य पारमार्थिकस्य स्थापनं भगीरथप्रयत्नेन ? अधिष्ठानापारमार्थे भ्रमासम्भवो यदि प्रत्यक्षेणावगम्येत, तदा अपारमार्थिकदोषेणापि क्वचिद्भ्रमो न दृष्टो भवेत्। यदि दोषेऽपारमार्थ्यं कल्प्यते, तदा कल्पकदोषस्य पूर्वपूर्वकल्पनायामनवस्था स्यात्, तस्माद्दोषस्य पारमार्थ्यं स्वीकार्यम्। यदि अनवस्थादोषनिरासाय स्वरूपानादि व-प्रवाहानादित्वदुर्घटत्वं स्वपरनिर्वाहकत्वं वोच्यते, तदाधिष्ठानमपि तथास्वरूपानादि-त्वाद्याश्रयेणानवस्थानिवृत्तौ कल्पितपारमार्थ्यं वस्तुतोऽपारमार्थिकं सद्भ्रमप्रवर्तकं स्यादिति।

शोधकवाक्येऽष्वपि सत्यं ज्ञानमनन्तं ब्रह्म, आनन्दो ब्रह्मेत्यादिषु सामानाधिकरण्यव्युत्पत्तिसिद्धानेकगुणविशिष्टैकार्थाभिधानमविरुद्धमिति सर्वगुणविशिष्टं ब्रह्माभिधीयत इति पूर्वमेवोक्तम्। अथात आदेशो नेति नेतीति बहुधा निषेधो दृश्यत इति चेत्, किमत्र निषिद्धयत इति वक्तव्यम्, द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तमेव चेति मूर्तामूर्तात्मकः प्रपञ्चः। सर्वोऽपि निषिध्यत इति चेत्, ब्रह्मणो रूपतया अप्रज्ञातं सर्वं रूपतयोपदिश्य पुनस्तदेव निषेद्धुमयुक्तम्, 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्'-इति न्यायात्। कस्तर्हि निषेधवाक्यार्थः ? सूत्रकारः स्वयमेव वदति "प्रकृतैतावत्वं हि प्रतिषेधति ततो ब्रवीति च भूयः" इति। उत्तरत्र अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेव सत्यमित्यादिना गुणगणस्य प्रतिपादितत्वात् पूर्वप्रकृतैतावन्मात्रं न भवति ब्रह्मेति। ब्रह्मणस्तावन्मात्रता प्रतिषिध्यत इति सूत्रार्थः। नेह नानास्ति किञ्चनेत्यादिना

---

परैर्निर्विशेषपरत्वेनोक्तानां श्रुतीनां भेदनिषेधपरत्वमपि निरसनीयम्, तेन सद्विद्याप्रकरणीयश्रुतीनां भेदनिषेधपरत्वं निरस्तम्। अथ शोधकवाक्यस्यापि भेदनिषेधपरत्वं व्युदस्यति शोधकवाक्येष्विति। "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्र ब्रह्मसमानविभक्तिकसत्यादिपदानि नानृतादिनिषेधपराणि, सामानाधिकरण्यशक्तिबलसिद्धभिन्नप्रवृत्तिनिमित्तकत्वविशिष्टैकार्थबोधकत्वार्थेन सत्यत्वादिप्रकारकब्रह्मविशेष्यकबोधजनकानीति सर्वगुणविशिष्टं ब्रह्मोच्यते। ननु सद्विद्याशोधकवाक्येषु आक्षेप्यभेदनिषेधपरत्वं मास्तु, कण्ठोक्तभेदनिषेधपरत्वं कुतो नेति शङ्कते—अथात इति। अथात आदेशो नेति नेति बहुधा आदिश्यमानस्य विधीयमानस्य निषेधः श्रूयते, तेन भेदनिषेध आयातीति चेत्, किमत्र निषिध्यते ? विहितस्य—प्रमाणान्तरा सिद्धस्य निषेधायोगादिति क्षेपे "किं" प्रयोगः द्वे ब्रह्मणो रूपे, मूर्तं—परिच्छिन्नपरिमाणं पृथिव्यादि, अमूर्तमपरिच्छिन्नमाकाशादि निषिध्यत इति चेत्, ब्रह्मणो रूपतया ब्रह्मणः शरीरतया प्रत्यक्षप्रमाणेनाज्ञातस्य ब्रह्मणो द्वे रूप इति श्रुतिविहितस्य निषेधोऽयुक्तो विहितस्य निषेध्यत्वे नेष्टत्वे "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति न्यायेन विधानमेवानुचितम्। कस्तर्हि निषेधवाक्यार्थ इति जिज्ञासायां सूत्रकारः स्वयमेव वदति, प्रकृतैतावत्वं प्रतिषेधति। यतस्ततो ब्रवीति च भूय इति मूर्तामूर्तरूपविधेयाबुत्तरत्र भूयो बहुतरं गुणगणस्य, अर्थात् प्रकृतस्य मूर्तामूर्तात्मकरूपस्यैतावत्वं प्रतिषेधति ब्रह्मणस्तावन्मात्ररूपतां निषेधति।

नानात्वप्रतिषेध एव दृश्यत इति चेत्, अन्यत्राप्युत्तरत्र सर्वस्य वशी सर्वस्येशान इति सत्यसङ्कल्पत्व-सर्वेश्वरत्वप्रतिपादनाच्चेतनाचेतनवस्तुशरीर इति सर्वप्रकारसंस्थितः सर्वेश्वरः स एक एवेति तत्प्रत्यनीकाब्रह्मात्मकनानात्वं प्रतिषिद्धं न भवदभिमतम्। सर्वास्वेवं प्रकारासु श्रुतिष्वियमेव स्थितिरिति न क्वचिदपि ब्रह्मणः सविशेषत्वनिषेधवाची कोऽपि शब्दो दृश्यते।

अपि च निर्विशेषज्ञानमात्रं ब्रह्म तच्चाच्छादिकाऽविद्यातिरोहितस्वरूपं स्वगतनानात्वं पश्यतीत्ययमर्थो न घटते। तिरोधानं नाम प्रकाशनिवारणं स्वरूपातिरेकिप्रकाशधर्मानभ्युपगमेन प्रकाशस्यैव स्वरूपत्वात् स्वरूपनाश एवोक्तस्स्यात्। प्रकाशपर्यायं ज्ञानं नित्यम्, स च प्रकाशोऽविद्यातिरोहित इति बालिशभाषितम्, अविद्यया प्रकाशस्तिरोहित इति।

---

यतस्ततो ब्रवीति च भूय इति मूर्तामूर्तरूपविधेयादुत्तरत्र भूयो बहुतरं गुणगणस्य। अथ नामधेयं सत्यस्य सत्यमित्यादिना प्रतिपादितत्वात् पूर्वप्रकृतमूर्तामूर्तैतावन्मात्ररूपं ब्रह्म नेति ब्रह्मणस्तावन्मात्रता प्रतिषिध्यते, न भेदः। न च नेह नानास्ति किञ्चनेति श्रुतेरियत्तानिषेधपरत्वं दुर्वचमिति सकलभेदनिषेधपरत्वमिति वाच्यम्, अत्रापि नेह नानास्ति किञ्चनेति निषेधादुत्तरत्र सर्वस्य वशी सर्वस्येशान इति तत्प्रकरणीयान् सर्वस्याधिपतिः सर्वमिदं प्रशास्ति। एष सेतुर्विधारणमित्यादयः श्रुतयो वशीत्वं गुणेन वशीकरणशक्तिमत्त्वात् सत्यसङ्कल्पत्वमित्थं गुणगणस्य ताभिः प्रतिपादनात् सत्यसङ्कल्पत्वसर्वनियन्तृत्वसर्वेश्वरत्वसर्वधारकत्वैरीश्वरस्य सकलं जगद् वश्यं नियाम्यं स्वधार्यं शेषमिति शरीरम्। इत्थं चेतनाचेतनप्रकारकैकब्रह्मणो विहितत्वाद् विहितस्य निषेधानर्हत्वात् तत्प्रत्यनीकं ब्रह्मात्मकप्रत्यनीकम्, अब्रह्मात्मकं नानात्वं निषेधश्रुत्या प्रतिसिद्धम्, न भवदभिमतं शुद्धनानात्वम्। सर्वास्वेवंप्रकारासु निषेधवादिनीषु श्रुतिषु इयमेव स्थितिरिति न क्वचिद् ब्रह्मणः स्वविशेषत्वनिषेधकः शब्दोऽस्ति।

ब्रह्माज्ञानवादस्य निरुक्तोपपत्तिप्रकारेण श्रुत्यपेतत्वमुपपाद्य न्यायापेतत्त्वं साधयति अपि चेति। निर्विशेषज्ञानमात्रं सकलभेदविधुरमविद्यातिरोहितस्वरूपं तत्तिरोधानशक्त्याऽऽच्छादितस्वरूपं विक्षेपशक्त्या स्वगतनानात्वं भेदं पश्यतीत्यर्थो न घटते, न विरुद्धो भवति, ब्रह्मणि प्रकाशस्वरूपातिरिक्तधर्मवादिना तिरोधानं प्रकाशनिवारणमित्यभ्युपगमे स्वरूपप्रकाशनाश एवाभ्युपगतः स्यात्। प्रकाशपर्यायं प्रकाशनामान्तरं ज्ञानं नित्यम्, प्रकाशोऽविद्यातिरोहितोऽविद्यानष्ट इति विरुद्धं बालिशाः न्यायश्रुतियाथार्थ्यज्ञानशून्या वदन्ति।

प्रकाशोत्पत्तिप्रतिबन्धो वा विद्यमानस्य विनाशो वा ? प्रकाशस्यानुत्पाद्यत्वाद् विनाश एव स्यात् । प्रकाशो नित्यो निर्विकारस्तिष्ठतीति चेत्, सत्यामप्यविद्यायां ब्रह्मणि न किञ्चित् तिरोहितमिति नानात्वं पश्यतीति भवतामयं व्यवहारः सत्स्वनिर्वचनीय एव स्यात् ।

ननु च भवतोऽपि विज्ञानस्वरूपात्माऽभ्युपगन्तव्यः, स च स्वयंप्रकाशस्तस्य च देवादिस्वरूपात्माभिमाने स्वरूपप्रकाशतिरोधानमवश्यमाश्रयणीयम्, स्वरूपप्रकाशे सति स्वात्मन्याकारान्ताध्यासायोगात् । अतो भवतश्चायं समानो दोषः । किञ्चास्माकमेकस्मिन्नेवात्मनि भवदुदीरितं दुर्घटत्वं भवतामात्मन्यानन्त्याभ्युपगमात् सर्वेष्वयं दोषः परिहरणीयः ।

अत्रोच्यते—स्वभावतो यत्नप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपं स्वाभाविकानवधिकातिशयापरिमितोदारगुणसागरं निमेषकाष्ठाकलामूहूर्त्तादि-

---

अथ चाविद्यया प्रकाशस्तिरोहित इति प्रकाशोत्पत्तिप्रतिबन्धः प्रकाशोत्पत्तिसामग्रीवैकल्प्यसम्पादनं विद्यमानस्य प्रकाशस्य विनाशो वा, प्रकाशस्य नित्यत्वेनानुत्पाद्यत्वाद् विनाश एव तिरोधानपदार्थः स्यात् । प्रकाशोऽविद्यया न नश्यति, नित्यो निर्विकारस्तिष्ठति चेत्, तदा सत्यामप्यविद्यायां ब्रह्मणि न किञ्चित्तिरोहितं किञ्चिन्न नष्टमिति नानात्वं पश्यतीति—अविद्यातिरोहित-ब्रह्मनानात्वं स्वगतचराचरभेदं पश्यतीति भवतां व्यवहारः सत्सु विद्वत्सु अनिर्वचनीयो वक्तुमयोग्यः स्यात् । स्वप्रकाशश्रुतितिरोधानश्रुतिसामञ्जस्यं न भवतीति भावः ।

ननु सत्यं ज्ञानमिति श्रुत्या ज्ञानरूपोऽत्रायं पुरुषः स्वयं ज्योतिरिति श्रुत्या स्वयंप्रकाशस्तया तिरोहितत्वाच्च तिरोधानमभ्युपेयम् । इत्थमात्माज्ञानस्वरूपः स्वयंप्रकाशोऽविद्यया तिरोहितो भवतीति त्वयापि स्वीकार्यमेवञ्च स्वयंप्रकाशे आत्मनि देवादिस्वरूपात्माऽभिमानो नोपपद्यते, स्वयंप्रकाशस्याकारान्तराऽध्यासायोगात् । अतो भवतोऽपि दोषपरिहारः समानः । किञ्च, भवतां मते आत्मनोऽनेकत्वाङ्गीकारात् सर्वेष्वात्मस्वयं दोषः परिहरणीयः, एकत्ववादिनस्तु एकस्यैवेति ।

प्रतिवन्दीं समानदोषपरिहारं वदतो मिथ्यावादिनोऽयमभिप्रायो वचनविरोधे न्यायो न प्रवर्त्तते । अनृतेन प्रत्यूढा 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादि वचनेन सिद्धात्मस्वरूपतिरोधानं तर्केण बाधितुमयोग्यम् इति विशिष्टाद्वैतवादिना कृतं समाधानमद्वैतवादिनोऽपि भवेत्; किन्तु इयं तेषां कुदृष्टिः । तथा हि मिथ्यावादिनो हि स्वयं-

**परार्धपर्यन्तापरिमितव्यवच्छेदस्वरूपसर्वोत्पत्तिस्थितिविनाशादि सर्वपरिणामनिमित्तभूतकालकृतपरिणामास्पृष्टानन्तमहाविभूतिस्वलीलापरिकरस्वांशभूतानन्तबद्धमुक्तनानाविधचेतनतद्भोग्यभूतानन्तविचित्रपरिणामशक्तिचेतनेतरवस्तुजातान्तर्यामित्वकृतसर्वशरीरत्वसर्वप्रकारावस्थानावस्थितं परं ब्रह्म च वेद्यम्। तत्साक्षात्कारक्षम-भगवद्द्वैपायन-पराशर-वाल्मीकि-मनु-याज्ञवल्क्य-गौतमापस्तम्बप्रभृतिमुनिगणप्रणीतविध्यर्थवादमन्त्ररूपवेद-**

---

प्रकाशब्रह्मस्वरूपतिरोधानाज्ञानविक्षेपवादो विभूतिमिथ्यावादश्च 'विजरो विमृत्युरविजिघत्स' इति वचनेन निखिलहेयप्रत्यनीकबोधनेन सत्यकामसत्यसङ्कल्पत्वादिकल्याणगुणबोधकेन श्रुतिवचनेन विरुद्ध इति न वचनसिद्धतेति तेषां तर्केण निरासः शक्यः।

जीवाज्ञानस्वरूपतिरोधानं न वचनान्तरविरुद्धमिति तस्य श्रुतिबोधितत्वेन तर्ककृताऽनुपपत्तिर्न सम्भवतीति प्रामाणिकनिर्णयः, तदेव मूलकारो विशदयति—**अत्रोच्यत इति**। स्वभावतो न पञ्चगव्यवत् कृत्रिमशक्त्यामलो दोषस्तस्य प्रत्यनीकं विरोधिदोषरहितं वा। अनन्तमपरिच्छिन्नं देशकालवस्तुपरिच्छेदरहितं ज्ञानानन्दरूपं न यत् किञ्चिदवच्छेदेन जडत्वदुःखत्वरूपवत्त्वम्, अनेन भ्रमानुपपत्तिरुक्ता, स्वाभाविका न कर्मार्जिता अवधिना स्वापेक्षातिशयेन च रहिता अपरिमिता उदारा उत्कृष्टा ये गुणास्तेषां सागरो यत्र, तदनेन निर्गुणत्वानुपपत्तिरुक्ता। निमेषः, काष्ठाः, कलामूहूर्त्तमादिपरार्धपर्यन्तं येषां तेऽपरिमिता व्यवच्छेदाः कालासाधारणधर्माः स्वरूपं यस्य सः। अथ च सर्वस्य लीलाविभूतेर्जगत उत्पत्तिस्थितिविनाशा आदिर्यस्य स सर्वपरिणामस्तस्य निमित्तभूतश्च यः कालस्तत्कृतपरिणामोऽवस्थान्तराप्तिस्तयाऽस्पृष्टा अनन्ता महाविभूतिः त्रिपादविभूतिर्यस्य तत्, अनेन विशेषणेन विभूतेर्भ्रमविषयत्वानुपपत्तिरुक्ता, स्वलीलापरिकरः स्वक्रीडासामग्रीभूताः स्वविशेषणभूता अनन्ता अपरिच्छिन्ना बद्धा मुक्ता मुक्तानां लीलोपकरणत्वं मोचनलीलोपकरणत्वेन, नानाविधत्वं भगवल्लीलान्तर्गतस्वसङ्कल्पकृतविविधरूपवत्त्वेन स एकधा भवतीत्यादि श्रुतिबलात्। तेन बद्धमुक्तनानाविधचेतना, अथ च तेषां भोग्यभूतं सुखदुःखसाक्षात्कारतत्साधनभूतमनन्तपरिच्छेदरहितो विचित्रो विविधचमत्कारजनकः परिणामोऽवस्थान्तरापत्तिरूपस्तस्य शक्तिस्तज्जननानुकूलो धर्मो यस्य तत्, चेतनेतरवस्तुजातं प्रधानाव्यक्तकालरूपम्। कालो हि स्वस्य प्रकृतेश्च परिणामहेतुर्न महाविभूतेरिति व्यज्यते। चेतनेतरवस्तुजातस्यान्तर्यामित्वमन्तर्नियमकर्तृत्वं तत्कृतसर्वशरीरकत्वं नित्यविभूतिलीलाविभूतिचेतनशरीरकत्वं सर्वप्रकारावस्थानावस्थितं निरुक्तचेतनाचेतनसंस्थानरूपेण तद्द्वारावस्थितं परं ब्रह्म च वेद्यं श्रुतिवेद्यमभ्युपगच्छतामित्यत्रान्वयः। ब्रह्मभ्रमरूपस्वाभिमतार्थप्रतिपादकवचनस्य मिथ्यात्वम्, तत्प्रामाण्यस्य च मिथ्यात्वं वदता त्वया वचनविरोधे न्यायो नेत्यर्थोऽपि दुर्वचः।

मूलेतिहासपुराणधर्मशास्त्रोपबृंहितपरमार्थभूतानादिनिधनाविच्छिन्नपाठ-सम्प्रदाय-ऋग्यजुःसामाथर्वरूपानन्तशाखं वेदञ्चाभ्युपगच्छतामस्माकं किं न सेत्स्यति ।

यथोक्तं भगवता द्वैपायनेन—

यो मामजमनादिञ्च वेत्ति लोकमहेश्वरम् ।।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।।

कालं स पचते तत्र न कालस्तत्र न वै प्रभुः ।
एते वै निरयास्तात स्थानस्य परमात्मनः ।।

अव्यक्तादिविशेषान्तं परिणामर्द्धिसंयुतम् ।
क्रीडाहरेरिदं सर्वं क्षरमित्यवधार्यताम् ।।

---

अस्माकं किं न सेत्स्यति ? कथंभूतानामस्माकमित्याह—तत्साक्षात्कारेत्यादिना । पठ्यमानापठ्यमानशाखार्थसाक्षात्कारक्षमभगवद्द्वैपायनपराशरवाल्मीकिमनुयाज्ञवल्क्य-गौतमापस्तम्बप्रभृतिमुनिगणप्रणीतानि यानि विधिविधायकं वाक्यम्, मन्त्रो हि प्रयोग-कार्यसमवेतार्थस्मारकं श्रुतिवाक्यमर्थवादः । विधितदङ्गप्रशस्तितदनङ्गनिन्दापर-श्रुतिवचनम् । तन्मूलानि—तानि मूलानि येषु तानि यानि इतिहासपुराणधर्म-शास्त्राणि, विधिमूलकं धर्मशास्त्रम्, मन्त्रार्थवादमूलके इतिहासपुराणे, तदुपबृंहितः तद्-व्याख्यातः परमार्थभूतोऽनादिनिधन उत्पत्तिविनाशरहितोऽविच्छिन्नः, विच्छेदरहितः पाठः, उच्चारणानुच्चारणं तस्य सम्प्रदायः, शिष्टपरिगृहीता गुरुपरम्परा यस्य सोऽथ ऋग्यजुःसामाथर्वरूपं यस्य सोऽथ अनन्ताः शाखा यस्य स एवंभूतं वेदमभ्युपगच्छतां किं न सेत्स्यति, सर्वमित्यर्थः । नहि वचनविरोधे न्यायः प्रवर्त्तत इति जैमिनिस्तं सूत्रानुगृहीतं जीवस्वरूपतिरोधानादिकं ब्रह्मणो निखिलहेयप्रत्यनीकत्वं कल्याणगुणैक-तानत्वञ्च सेत्स्यति ।

ब्रह्मणो हि चेतनाचेतनविलक्षणत्वे नित्यविभूतिमत्वे जगतः शेषस्य शेषित्वे लीलाविभूतेः कालकृतपरिणामत्वे प्रमाणतया परिगणनक्रमेण मुनिवचनानि उपादत्ते—यथोक्तमिति । द्वैपायनं महाभारतवचनम्, यो मामजमनादिञ्चेत्यादि । अजत्वेन

कृष्ण एव हि लोकानामुत्पत्तिरपि चाव्ययः ।
कृष्णस्य हि कृते भूतमिदं विश्वचराचरम् ।। इति ।

कृष्णकृते इति कृष्णस्य शेषभूतं सर्वमित्यर्थः ।

भगवता पराशरेणाप्युक्तम्—

शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते ।
मैत्रेय भगवच्छब्दः सर्वकारणकारणः ।।

ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ।।

एवमेष महाशब्दो मैत्रेय भगवानिति ।
परब्रह्मभूतस्य वासुदेवस्य नान्यगः ।।

तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽयं नोपचारेण त्वन्यत्र ह्युपचारतः ।।

एवं प्रकारममलं सत्यं व्यापकमक्षयम् ।
समस्तहेयरहितं विष्णवाख्यं परमं पदम् ।।

कलामुहूर्तादिमयश्च कालो नयद्विभूतेः परिणामहेतुः ।।
क्रीडतो बालकस्येव चेष्टां तस्य निशामय ।। इत्यादि ।

---

बद्धाचेतनविलक्षणत्वमनादित्वेन मुक्तविलक्षणत्वम्, लोकमहेश्वरमित्यनेन नित्यसिद्धविलक्षणत्वम्, स्वस्य परमात्मनो बोध्यते । "द्वाविमौ पुरुषौ लोके" इत्यादिना भगवतो मुक्तबद्धचेतनवैलक्षण्यमुच्यते । सकलचेतनाचेतनभरणव्यापनस्वामित्वादयः प्रतिपन्नाः । "कालं स पचते तत्र न कालस्तत्र वै प्रभुः" इत्यादिना कालाविकार्यनित्यविभूतिमत्वम् । अव्यक्तादीनीत्यादिना कालपरिणन्तव्य-लीलाविभूतिमत्वम्, कृष्णकृते इत्यनेनोभयोर्विभूत्योः शेषत्वम्, भगवच्छरीरत्वं च बोध्यते ।

उक्तार्थं भगवतश्चराचरवैलक्षण्यं जीवस्याविद्यापारतन्त्र्यं विशदयन् उक्तार्थभगवच्छब्दस्य जीवागामित्वं तत्रौपचारिकत्वम्, परदेवे मुख्यत्वमित्यादि पराशरादिवचनैः प्रमाणयति, 'शुद्धे महाविभूत्याख्ये इत्यादि महाविभूतिनामके सर्वकारणकारणे सर्वकारणप्रकृतिकारणभूते परमात्मनि भगवच्छब्दो मुख्योऽन्यत्रौपचारिकस्तेनोभयविभूतिमत्वमुक्तं भवति ।

मनुनापि—

प्रशासितारं सर्वेषामणीयांसमणोयसाम् । इत्यादिनोक्तम् ।

याज्ञवल्क्येनापि—

क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ॥ इति ।

आपस्तम्बेनापि—पूः प्राणिनः सर्वं एव गुहाशयस्येति, सर्वे प्राणिनो गुहाशयस्य परमात्मनः पूः पुरं शरीरमित्यर्थः । प्राणिन इति जीवात्मक-भूतसंघाताः ।

ननु किमनेनाडम्बरेण चोद्यन्तु न परिहृतम् उच्यते । एवमभ्युपगच्छ-तामस्माकमात्मधर्मभूतस्य चैतन्यस्य स्वाभाविकस्यापि कर्मणा पारमार्थिकं संकोचं विकासञ्च ब्रुवतां सर्वमिदं परिहृतम्, भवतस्तु प्रकाश एव स्वरूप-मिति प्रकाशो न धर्मभूतः, तस्य संकोचो विकासो वा नाभ्युपगम्यते ।

---

'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः' ॥

इत्यनेन ज्ञानादिगुणपूर्णभगवच्छब्दवाच्यो न जीव इति जीवात्तस्य वैलक्षण्यं ब्रह्मणि हेयप्रत्यनीकत्वकल्याणगुणैकतानत्वोभयलिङ्गमुक्तम्, जीवे भगवच्छब्दस्य गुणलेश-योगेनौपचारिकत्वमुक्तम्, नित्यविभूतेः कालापरिणामत्वे मानमुच्यते कलामूहूर्तादी-त्यादिना । मनुनापि प्रशासितारमित्यादिना प्रशासितृत्वादि भगवदसाधारणगुणा उक्ताः । याज्ञवल्क्येन ईश्वरोपासनपरजीवस्य मुक्तिरुक्ता, क्षेत्रज्ञस्येश्वरेत्यादिना । आपस्तम्बेन जोवस्य परब्रह्मशरीरत्वमुक्तं जीवनिकरस्य पूः प्राणिन इत्यादिना ।

"वचनविरोधे न्यायो न प्रवर्तते" इति स्वपक्षस्यैव साधकेन न्यायेन स्पष्टं समाधानमबुध्यमान उपपत्त्यैव परिहारमपेक्षमाणः शङ्कते—ननु चेति । किं बहुवक्त-व्येन, चोद्यन्न परिहृतम्, प्रश्नविषयं दूषणं न निवारितम्, स्पष्टमुच्यते । नहि वचन-विरोध एव परिहारोऽपि तु केवलं तर्केणापि परिहारः शक्यः, एवं प्रमाण-प्रमेय-पारमार्थिकत्वमभ्युपगच्छतामस्माकमात्मधर्मभूतस्य न स्वरूपभूतस्य चैतन्यस्य ज्ञानस्य स्वाभाविकस्य नित्यस्य कर्मणा जीवकृतपापपुण्यात्मकेन पारमार्थिकं संकोचं विकासञ्च नापारमार्थिकम्, तत्कल्पकतिरोधायकपूर्वपूर्वकल्पनया अनवस्थापातात् । तेनैव मिथ्यावादिना संकोचविकासौ न शक्यकल्पनौ संकोचप्रकाशप्रसरानुत्पत्तिं विकासं प्रकाशप्रसरोदयञ्च ब्रुवतां सर्वमिदं तिरोधानानुपपत्त्यादिरूपं दूषणं परिहृतम् ।

प्रकाशप्रसरानुत्पत्तिमेव कर्मादयः कुर्वन्ति। अविद्या चेत् तिरोधानं तिरोधानभूतया तया स्वरूपप्रकाशनाश इति पूर्वमुक्तः। अस्माकं तु अविद्यारूपेण कर्मणा स्वरूपनित्यधर्मभूतज्ञानप्रकाशः सङ्कुचितः, तेन देवादिस्वरूपात्माभिमानो भवतीति विशेषः। यथोक्तम्—

अविद्याकर्मसंज्ञान्या तृतीयाशक्तिरुच्यते।
यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा॥
संसारतापानखिलानवाप्नोत्यतिसन्ततान्।
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता॥
सर्वभूतेषु भूपाल तारतम्येन वर्तते।

क्षेत्रज्ञानां स्वधर्मभूतस्य ज्ञानस्य कर्मसंज्ञयाऽविद्यया संकोचं विकासञ्च दर्शयति।

---

अयं भावः—जीवस्य स्वरूपं स्वप्रकाशं सदास्फुरितं तिष्ठति। तत्रात्मरूपमात्रं भासते, न तद्गतनित्यत्वाणुत्वादि तद्धर्मभूतज्ञानस्य विषयम्। कर्मणा धर्मभूतज्ञानस्य संकोचे तस्यापि धर्मभूतस्य ज्ञानस्य धर्मभूतप्रकाशाख्यप्रसराभाव अणुत्वनित्यत्वाद्यभाने आत्मना देवाद्यभेदभ्रमे पुनः कर्मणा देहान्तरप्राप्तिभ्रमकर्मपरम्परा चलति। विकासे धर्मभूतज्ञानधर्मप्रकाशाख्यप्रसरे सति धर्मभूतज्ञाने स्वरूपनिष्ठाणुत्वादिधर्मेषु प्रकाशितेषु देवादिदेहभ्रमा निवर्तन्ते, तिरोधानं स्वरूपस्य न भवति। भवतो मिथ्यावादिनः स्वरूपमेव प्रकाशस्तस्य नित्यत्वात् संकोचविकासौ न सम्भवतः। अस्माकं कर्मादयः कर्माविद्यावासनाप्रकाशरूपप्रसरस्य धर्मभूतज्ञानधर्मस्योत्पत्त्यभावमेव कुर्वन्ति। तव मतेऽविद्या चेत् तिरोधायिका स्वरूपस्य स्यात्तदा स्वरूपस्य नाश एव स्यात्। अस्माकं तु अविद्यारूपेग कर्मणा धर्मभूतज्ञानस्य संकोचात् तेन देवादिरूपात्माभिमानो जात इति त्वत्तो वैलक्षण्यम्। कर्मणोऽविद्यारूपत्वे प्रमाणानि—

अविद्या कर्मसंज्ञान्या तृतीयाशक्तिरुच्यते। इति।

विद्याभिन्नोऽविद्याक्षेत्रज्ञो जीवस्तस्य शक्तिर्धर्मभूतं ज्ञानम्, वेष्टिता संकुचिता, मनुष्यपश्वादियोनिलाभेन संसारतापान्नाधिभौतिकादीनवाप्नोति, इत्याह—सर्वभूतेषु भूपालेत्यादि विकासञ्च दर्शयतीत्यन्तेन ग्रन्थेन।

अपि च आच्छादिका विद्या श्रुतिभिश्चैक्योपदेशबलाच्च ब्रह्मस्वरूपतिरोधानहेतुदोषरूपाऽऽश्रीयते। तस्याश्च मिथ्यारूपत्वेन प्रपञ्चवत् स्वदर्शनमूलदोषापेक्षत्वान्न सा मिथ्यादर्शनमूलदोषः स्यादिति ब्रह्मैव स्वदर्शनमूलं स्यात्। तस्याश्चानादित्वेऽपि मिथ्यारूपत्वादेव ब्रह्मदृश्यत्वेनैवानादित्वात्तद्दर्शनमूलपारमार्थिकदोषानभ्युपगमाच्च ब्रह्मैव तद्दर्शनमूलं स्यात्, तस्य नित्यत्वादनिर्मोक्ष एव स्यात्।

अत एवेदमपि निरस्तम्। एकमेव शरीरं जीववत्, निर्जीवानीतराणि शरीराणि। स्वप्नदृष्टनानाविधशरीराणां यथा निर्जीवत्वम्, तत्र स्वप्ने द्रष्टुः शरीरमेकमेव जीववत्, तस्य स्वप्नवेलायां दृश्यभूतनानाविधानन्त-

---

अथाविद्याया अपारमार्थिकत्वाभ्युपगमेन भ्रमहेतुभूतदोषस्य पारमार्थिकत्वेन प्रसिद्धत्वात् तस्याभेददर्शनमूलदोषस्वरूपानुपपत्तिं साधयन्नाह—अपि चेति। आच्छादिका स्वरूपाच्छादिकाऽविद्या विद्याविरुद्धाभावरूपा श्रुतिभिस्तत्त्वमस्यादिश्रुतिभिर्जीवब्रह्मणोरैक्योपदेशात्, एकतत्त्वबोधनात्। जीवब्रह्मभेदः परस्परजीवभेदः प्रकृतिजीवभेदः, प्रकृतिविकारपरस्परभेदो मिथ्याभूत इति विविधभेददर्शनमूलभूता स्वरूपतिरोधानकरी अविद्याऽऽश्रीयते, तस्या अविद्याया अद्वैतहानिभयान्मिथ्याभूतत्वेन प्रपञ्चवत् प्रपञ्चस्येव स्वदर्शनमूलदोषापेक्षत्वात्, अविद्यादर्शनमूलाविद्यादोषापेक्षत्वात्। अपारमार्थिकत्वेन न साऽविद्यामिथ्यादर्शन–मिथ्याभेददर्शनमूलं दोषः स्यात्।

ननु उपपादकस्योपपादकान्तरानपेक्षत्वमिति न्यायेन नाविद्याया अविद्यान्तरापेक्षेति चेन्न। उक्तन्यायस्य परमार्थवस्तुविषयत्वात् स्वप्रतीतिपरप्रतीतिहेतुत्वं स्वोपपादकान्तरानपेक्षकत्वम्। तच्च पारमार्थिकत्वे सम्भवति परमार्थस्सन् स्वस्य परस्य प्रत्यायको भवति, अपरमार्थः प्रतीतिमात्रं प्रतीतिमात्रस्य हेतुश्चेदात्माश्रयः स्यात्। नहि प्रतीतिः स्वसत्ताहेतुर्भवति। एवमविद्याया दोषत्वाभावे ब्रह्मैव दोषमूलं स्यात्। न चाविद्यायाः पूर्वपूर्वाविद्याजन्यत्वेन तस्याश्चानादित्वेन नानवस्थादोष इति तस्यादोषत्वं स्यादिति वाच्यम्, मिथ्याभूतत्वे ब्रह्मदृश्यत्वेन अनादित्वमिति पारमार्थिकत्वाभावात्। पारमार्थिकस्यैव रागचाकचिक्यादेरिव दोषत्वनिर्णयाद् ब्रह्मैव भेददर्शनमूलं स्यादिति ब्रह्मणो नित्यत्वेन भेददर्शनस्यानिवार्यतया अनिर्मोक्ष एव स्यात्।

स्वप्ने द्रष्टुस्तच्छरीरस्य च सत्यत्वं तत्कल्पितशरीराणां जीवानां मिथ्यात्वञ्च जागरे क्रमेणाबाधितत्वाद् बाधितत्वाच्च यथा, तथा जागरे जीवस्यैकस्य सत्यत्वमन्येषां जीवानामसत्यत्वम्, इत्येकजीववादं निराकरिष्यन्नाह—अत एवेदमित्यादि। अत एव

शरीराणां निर्जीववत्त्वमेव अनेनैकेनैव परिकल्पितत्वात् । जीवा मिथ्याभूता इति ब्रह्मणा स्वस्वरूपव्यतिरिक्तस्य जीवभावस्य सर्वशरीराणाञ्च कल्पितत्वादेकस्मिन्नपि शरीरे शरीरवज्जीवसद्भावस्य च मिथ्यारूपत्वात् सर्वाणि शरीराणि मिथ्यारूपाणि, तत्र जीवभावश्च मिथ्यारूप इत्येकस्य शरीरस्य तत्र जीवसद्भावस्य च न कस्यचिद्विशेषः । अस्माकं तु स्वप्ने द्रष्टुः स्वशरीरस्य तस्मिन्नात्मसद्भावस्य च प्रबोधवेलायामबाधितत्वात् । अन्येषां शरीराणां तद्गतजीवानाञ्च बाधितत्वात् ते सर्वे मिथ्याभूताः, स्वशरीरमेकम्, तस्मिन् जीवभावश्च परमार्थ इति विशेषः ।

अपि च केन वाऽविद्यानिवृत्तिः, सा च कीदृशीति विवेचनीयम् । ऐक्यज्ञानं निवर्त्तकम्, निवृत्तिरनिर्वचनीयप्रत्यनीकाकारेति चेत्, अनि-

---

ब्रह्मव्यतिरिक्तस्य मिथ्यात्वादेवेदमपि एकजीवसत्यत्वस्थापनमपि निरस्तम्, निराकृतम् । उक्तस्थापनामुपपादयति—एकमेव शरीरं जीववद् जागरे एकं शरीरं जीववत्सत्यमितराणि जागरे दृश्यमानानि शरीराणि निर्जीवानि मिथ्याभूतानि स्वप्नदृष्टनानाविधशरीराणां जीवानां जागरे बाधितत्वेन यथामिथ्यात्वं स्वप्ने द्रष्टुरेकं शरीरं सत्यजीववद् जागरेऽबाधितत्वाज्जीवेनैकेन सत्येन स्वाप्निकानां कल्पितत्वादिति ।

निराकरणप्रकारमाह—ब्रह्मणः स्वरूपव्यतिरिक्तस्य स्वातिरिक्तस्य जागरे दृष्टस्यापि जीवनिकरस्य शरीराणाञ्च कल्पितत्वात्, अविद्यावशेन मिथ्याभानत्वात् । यथा स्वाप्निकानां जीवानां शरीराणां मिथ्यात्वम्, तथा जागरे जीवनिकरस्य मिथ्यात्वम्, इत्येकस्यापि जीवस्य न सत्यत्वम् । कथं जागरे एकस्य जीवस्य सत्यत्वं घटेत इति प्रोक्तम्—न कश्चिद्विशेष इत्यन्तेन ब्रह्मणेत्यादिना ग्रन्थेन । सिद्धान्ते जीवस्य सत्यत्वस्वीकारात् स्वप्ने जीवस्य द्रष्टुस्तच्छरीरस्य जागरेऽबाधितत्वेन सत्यत्वं स्वप्नदृष्टानां जीवानां शरीराणाञ्च जागरे बाधितत्त्वेन मिथ्यात्वम्, तव तु ब्रह्मव्यतिरिक्तस्य मिथ्यात्वेन जागरेऽनेकजीवशरीरवद् यस्मिन् शरीरे ब्रह्म जीवो भूत्वा विविधसजीवशरीराणि पश्यति, तस्यापि मिथ्यात्वेन स्वप्नदृष्टान्तेनैकजीववादो न सिद्ध्यतीत्याह—जीवभावश्च परमार्थ इत्यन्तेन ग्रन्थेन ।

निवर्त्तकानुपपत्तिम्, निवृत्त्यनुपपत्तिञ्चाह । अविद्यानिवृत्तिरैक्यज्ञानेन निवृत्तिश्च, अनिर्वचनीयसदसद्विलक्षणवस्तुप्रत्यनीकाकारा अर्थात्तद्विरुद्धाकारा सानिर्वचनीया स्यात् । सा तद्विलक्षणत्वेन सद्रूपा असद्रूपा वा उभयरूपा वा भवेत्, प्रकारान्तरं नास्ति ।

र्वचनीयप्रत्यनीकं निर्वचनीयम्, तच्च सद्वा असद्वा द्विरूपं वा कल्पान्तरं न विद्यते। ब्रह्मव्यतिरेकेणैतदभ्युपगमे पुनरविद्याऽनिवृत्ता स्यात्। ब्रह्मैव चेन्निवृत्तिः, तत्प्रागविशिष्टमिति वेदान्तज्ञानात् पूर्वमेव निवृत्तिः स्यात्। ऐक्यज्ञानं निवर्तकम्, तदभावात्संसार इति भवद्दर्शनं विहन्यते।

निवर्तकज्ञानस्याप्यविद्यारूपत्वात्तन्निवर्तनं केनेति वक्तव्यं निवर्तकज्ञानं स्वेतरसमस्तभेदं निवर्त्य क्षणिकत्वादेव स्वयमेव विनश्यति। दावानलविषनाशनविषान्तरवदिति चेत् न, निवर्तकज्ञानस्य ब्रह्मव्यतिरिक्तत्वेन तत्स्वरूपतदुत्पत्तिविनाशानां मिथ्यारूपत्वात् तद्विनाशरूपाऽविद्या तिष्ठत्येवेति, तद्विनाशदर्शनस्य निवर्तकं वक्तव्यमेव, दावाग्न्यादीनामपि पूर्वावस्थाविरोधिपरिणामपरम्पराऽवर्जनीयैव।

---

निवृत्तिर्ब्रह्मव्यतिरिक्ता यदि स्वीक्रियते, तत्त्वज्ञानेनाविद्यानिवृत्तौ जातायामपि ब्रह्मव्यतिरिक्तमविद्याकार्यं त्वयाऽभ्युपगतं स्यात्। अविद्यानिवृत्तिः कदापि न स्यात्। अतोऽकामेन त्वया निवृत्तिर्ब्रह्मरूपा स्वीकार्या, इति तस्य ब्रह्मणः प्रागपि सत्त्वेन तत्त्वज्ञानात्प्रागेवाविद्यानिवृत्तिप्रसक्तौ तत्त्वज्ञानेनैक्यज्ञानेनाविद्यानिर्मोक्ष इति त्वद्दर्शनं विहन्यत इत्याह—विहन्यत इत्यन्तेन ग्रन्थेन।

निवृत्तिज्ञानदूषणेन तत्त्वज्ञानाविद्यानिवृत्योः कार्यकारणभावव्याघातात्मकेन निवर्तके दूषितेऽपि निवृत्तेर्ब्रह्मरूपतया सिद्धत्वेन किं निवर्तकेनेति प्रकारेण निरस्तेऽपि द्वारान्तरेणापि निवर्तकानुपपत्तिं साधयन्नाह—किञ्चेति। निवर्तकज्ञानस्यैक्यज्ञानस्य शब्दजन्यत्वेन वृत्तिरूपतया ब्रह्माभिन्नत्वेनाविद्यारूपत्वात्तन्निवर्तनं केनेति वक्तव्यम्। न च दावानलो दावमशेषं विनाश्य स्वयं विनश्यति, विषं विषान्तरं विनाश्य स्वयं विनश्यति यथा, तथा निवर्तकज्ञानमशेषभेदं विनाश्य स्वयं तस्य क्षणिकत्वाद् विनश्येदिति वाच्यम्, निवर्तकज्ञानं ब्रह्माव्यतिरिक्तत्वान्मिथ्याऽतस्तत्स्वरूपं तत्स्थितिस्तदुत्पत्तिस्तद्विनाशः सर्वोऽपि मिथ्येति मिथ्यावस्तूनां भानप्राणत्वेन तद्भासिकाऽविद्या तिष्ठत्येव। वस्तुतदुत्पन्नस्यैव वास्तविको विनाशः मिथ्याभूतस्य निवर्तकज्ञानस्योत्पत्त्यादयोऽपि काल्पनिका एवेति विनाशदर्शनस्य निर्वतकं किञ्चिद् वक्तव्यमेवेति। अर्थाद् विनाशदर्शनतदाश्रयभ्रान्ततत्कल्पकाविद्यानिवर्तकं वक्तव्यमिति। तस्यापि तथात्वेनानवस्थापातान्निवर्तकोपपत्तिर्न दावाग्निदृष्टान्तेऽपि दावाग्निविनाशो न दावाग्निद्रव्याभावोऽपि तु दावाग्नेः पूर्वावस्थातोऽवस्थान्तरप्राप्तिरिति। अविद्यापि न निवृत्ता, इत्याह—आवर्जनीयैवेत्यन्तेन ग्रन्थेन।

अपि च चिन्मात्रब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्य कोऽयं ज्ञाताऽध्यासरूप इति चेत् न, तस्य निषेध्यतया निवर्तकज्ञानकर्मत्वात् तत्कर्तृत्वानुपपत्तेः। ब्रह्मस्वरूपमेवेति चेत् न, ब्रह्मणो निवर्तकज्ञानं प्रति ज्ञातृत्वं किं स्वरूपम्, उताध्यस्तम्, अध्यस्तञ्चेत्, अयमध्यासस्तन्मूलाविद्यान्तरञ्च निर्वतकज्ञानाविषयतया तिष्ठत्येव तन्निवर्तकान्तराभ्युपगमे तस्यापि त्रिरूपत्वात्। अनवस्थैव सर्वस्य हि ज्ञानस्य त्रिरूपत्वविरहे ज्ञानत्वमेव हीयते। कस्यचित्कञ्चनार्थंविशेषं प्रति सिद्धिरूपत्वाद् ज्ञानस्य त्रिरूपत्वविरहे भवतां स्वरूपभूतज्ञानवन्निवर्त्तकैक्यज्ञानमपि अनिवर्तकं स्यात्, ब्रह्मस्वरूपस्यैव ज्ञातृत्वाभ्युपगमेऽस्मदीय एव पक्षः परिगृहीतस्स्यात्। निवर्तकज्ञानस्वरूपज्ञातृत्वं च स्वनिवर्त्यान्तर्गतमिति वचनं भूतल-

---

निवर्तकज्ञानस्यैक्यज्ञानस्याश्रयानुपपत्तिमुपपादयति—अपि चेति। चिन्मात्रव्यतिरिक्तकृत्स्ननिषेधविषयकज्ञानस्य ज्ञाताऽऽश्रय. कः? अध्यासरूपः, कल्पित आश्रयो ब्रह्म वाऽऽश्रयः। नाद्यस्तस्य निषेध्यतया निवर्तकज्ञाननिवर्त्यतया तत्कर्तृत्वासम्भवात्। नहि नेदं रजतमिति निवर्तकज्ञानस्य निवर्त्यं रजतं तत्कर्तृ इति कश्चित्प्रमाता ब्रूयात्। ब्रह्मस्वरूपमेव निवर्तकज्ञानस्य कर्तृ इत्यपि न विकल्पसहम्। तथा हि ब्रह्मणो निवर्तकज्ञानं प्रति ज्ञातृत्वं ज्ञानसम्बन्धरूपं किं स्वरूपम्, उताध्यस्तं ब्रह्मरूपं वा कल्पितम्? अध्यस्तरूपत्वेऽध्यस्तज्ञानस्याध्यासरूपभानसारत्वेन तद्भासकाविद्याऽकामेन स्वीकर्तव्या स्यात्, सा च निर्वतकज्ञानाविषयतया तिष्ठेत्। तस्या अविद्याया निर्वतकज्ञानभानात्मकप्राणसमर्पकत्वेन न निरुक्तनिवर्तकज्ञाननिवर्त्यत्वम्। अथवा निवर्तकान्तराभ्युपगमे तज्ज्ञानस्यापि त्रिरूपत्वेन ज्ञातृज्ञेयाभ्यां सह तस्य निवर्तकज्ञानस्य त्रिरूपत्वेनानवस्थाऽप्रामाणिकानन्तविद्याकल्पनापत्तिः स्यादिति क्वचिद्विश्रामे तन्मूलमूलकाऽध्यासात्मकनिवर्तकज्ञानस्य ब्रह्मनिष्ठस्यासिद्धिः।

ज्ञानस्य त्रिरूपत्वे प्रमाणम्—यत्र यत्र प्रमाणजन्यज्ञानत्वम्, तत्र तत्र ज्ञातृवृत्तित्वसमानाधिकरणं यत् किञ्चिदर्थविषयकत्वमिति व्याप्तिरेव, इत्याह ज्ञानस्य प्रमाणजन्यज्ञानस्य निरुक्तत्रिरूपत्वविरहे ज्ञानत्वमेव न स्यात्। सिद्धिः कस्यचिज्ज्ञातुः कञ्चनार्थं प्रति किञ्चिदर्थविषयिणी भवति। प्रमाणजन्यज्ञानस्य वृत्तिज्ञानस्य त्रिरूपत्वविज्ञातृज्ञेयज्ञानरूपताविरहे स्वरूपभूतज्ञानवन्नित्यनिर्विशेषचिन्मात्रज्ञानवन्निवर्तकज्ञानमप्यनिवर्तकं स्यात्। ब्रह्मस्वरूपज्ञानस्य संसारनिवर्तकस्वाभावः सिद्धः, तत्तज्ज्ञानात्पूर्वं ब्रह्मसत्त्वेऽपि अविद्यानिवृत्यभाव[illegible] मिथ्यावादिनेवाङ्गीकारात्। अथ ब्रह्मस्वरूपस्यैव ज्ञातृत्वाभ्युपगमेऽध्यासरू[illegible]त्वानङ्गीकारे मदीयपक्ष एव परिग्रहीतस्स्यात्। निवर्तकज्ञानज्ञातृत्वं निवर्तकज्ञानरूपम्, तच्च

व्यतिरिक्तं सर्वं छिन्नं देवदत्तेनेत्यस्यामेव छेदनक्रियायामस्याश्छेदनक्रियायाश्छेतृत्वस्य च छेद्यान्तर्भाववचनवदुपहास्यम् ।

अपि च निखिलभेदनिवर्तकमिदमैक्यज्ञानं केन जातमिति विवेचनीयं श्रुत्यैव चेत्, तस्या ब्रह्मव्यतिरिक्ताया अविद्यापरिकल्पितत्वात् प्रपञ्चबाधकज्ञानस्योत्पादकत्वं न सम्भवति । तथा हि दुष्टकारणजन्यमपि रज्जुसर्पज्ञानं न दुष्टकारणजन्येन रज्जुरियं न सर्प इति ज्ञानेन बाध्यते । रज्जुसर्पज्ञानभये वर्तमाने केनचिद्भ्रान्तेन पुरुषेण रज्जुरियं न सर्प इत्युक्तेऽपि 'अयं भ्रान्तः' इति ज्ञाते सति तद्वचनं रज्जुसर्पज्ञानस्य बाधकं न भवति, भयश्च न निवर्तते, प्रयोजकज्ञानवतः श्रवणवेलायामेव हि ब्रह्मव्यतिरिक्तत्वेन श्रुतेरपि भ्रान्तमूलत्वं ज्ञातमिति । किञ्च, निवर्तकज्ञानस्य ज्ञातुस्तत्सामग्रीभूतशास्त्रस्य च ब्रह्मव्यतिरिक्ततया यदि बाध्यत्वमुच्यते, हन्त ! तर्हि प्रपञ्चनिवृत्तेर्मिथ्यात्वमायातीति प्रपञ्चस्य सत्यता स्यात् । स्वप्नदृष्टपुरुषवाक्यावगतपित्रादिमरणस्य मिथ्यात्वेन पित्रादिसत्यतावत् । किञ्च, तत्त्वमस्यादि वाक्यं न प्रपञ्चस्य बाधकं भ्रान्तिमूलत्वाद् भ्रान्तपुरुषप्रयुक्तरज्जुसर्पबाधकवाक्यवत् ।

---

ब्रह्मरूपमिति पूर्वमेवाविद्यानिवृत्तिरापतेदिति ब्रह्मरूपत्वमपि ज्ञातृत्वस्य नोपपद्यत इति ज्ञात्रनुपपत्तिः सिद्धैव । निवर्तकज्ञानस्वरूपं ज्ञातृत्वं स्वनिवर्त्यान्तर्गतमिति वक्ता भूतलव्यतिरिक्तं सर्वं देवदत्तेन छिन्नमिति वक्तृवदुपहास्यः । अत्र छेदनछेदकयोश्छेद्यानन्तर्भावान्निवर्तकज्ञानस्यापि स्वनिवर्त्यानन्तर्भावः ।

अथ सामग्र्यनुपपत्तिमाह—भेदनिवर्तकज्ञानस्य जनिका श्रुतिर्न भवितुमर्हति । श्रुतेरविद्याकल्पितत्वेन प्रपञ्चबाधकज्ञानोत्पादकत्वं न सम्भवति । दुष्टकारणजन्यमपि ज्ञानं रज्जुसर्पज्ञानं न दुष्टकारणजन्येन भ्रान्तप्रयुक्तेन रज्जुरियं न सर्प इति वाक्जन्येन ज्ञानेन बाध्यते । रज्जुसर्पज्ञानभयेन पलायमानो भ्रान्तपुरुषवाक्येन रज्जुरियं न सर्प इत्याकारेण जातबाधज्ञानवानपि अयं प्रयोक्ता भ्रान्त इति ज्ञानवांश्चेत्, न निवर्तते । मिथ्यात्वप्रयोजकब्रह्मव्यतिरिक्तत्वज्ञानवतस्तव श्रवणकाल एव भ्रान्तिमूलत्वेन श्रुतेर्मिथ्यात्वञ्जातमेवेति । असत्यत्वेनावगतश्रुतिजन्यज्ञानेन प्रपञ्चभेदभ्रमवतो भ्रमनिवृत्तिर्न सम्भवेत्, किं मिथ्यात्वेनावगतेभ्यो निवर्तकज्ञानश्रुतिज्ञातृभ्य उत्पन्नं प्रपञ्चमिथ्यात्वज्ञानम् ? प्रत्युत प्रपञ्चस्य सत्यत्वप्रतिष्ठापकं स्यात्, स्वप्नदृष्टपुरुषवाक्येनावगतपितृ-

ननु स्वप्ने कस्मिंश्चिद् भये वर्तमाने स्वप्नदशायामेवायं स्वप्न इति ज्ञाते सति पूर्वभयनिवृत्तिर्दृष्टा, तद्वदत्रापि सम्भवतीति नैवम्, स्वप्नवेलायामेव सोऽपि स्वप्न इति ज्ञाते सति भयानिवृत्तिरेव दृष्टेति न कश्चिद् विशेषः। श्रवणवेलायामेव सोऽपि स्वप्न इति ज्ञातमेवेत्युक्तम्। यदपि चेदमुक्तम्—भ्रान्तिपरिकल्पितत्वेन मिथ्याभूतमपि शास्त्रं सदद्वितीयं ब्रह्मेति बोधयति। तस्य सतो ब्रह्मणो विषयस्य पश्चात्तनबाधादर्शनाद् ब्रह्म सुस्थिरमेवेति तदयुक्तम्, शून्यमेव तत्त्वमिति वाक्येन तस्यापि बाधितत्वात्। इदं भ्रान्तिमूलं वाक्यमिति चेदद्वितीयं ब्रह्मेति वाक्यमपि भ्रान्तिमूलमिति स्वयमेवोक्तम्, पश्चात्तनबाधादर्शनं तु सर्वशून्यवाक्यस्यैवेति विशेषः।

---

मरणस्य सत्यतावत्। किञ्च, तत्त्वमस्यादि वाक्यं प्रपञ्चबाधकज्ञानजनकत्वाभाववद् भ्रान्तिमूलत्वात्, भ्रान्तप्रयुक्त-रज्जुसर्पबाधकवाक्यवत्।

ननु स्वप्ने वर्तमानस्य भयस्यायं स्वप्न इति ज्ञाते सति भयनिवृत्तिर्दृष्टा, तद्वदत्रापि "अविद्याकृतभ्रमेण दृष्टस्य प्रपञ्चस्य भ्रान्तिपरिकल्पितमिदम्" इति ज्ञानेन प्रपञ्चनिवृत्तिस्स्यादिति चेत्, न, स्वप्नवेलायामेवायमपि स्वप्न इति ज्ञाते भ्रमनिवृत्त्यदर्शनात्। न स्वप्नवाक्याच्छ्रुतिवाक्ये विशेषस्तव, श्रवणवेलायामेव प्रपञ्चमहावाक्योपदेशवेलायामेव ब्रह्मव्यतिरिक्तत्वेन सर्वं मिथ्येति वाक्यस्य तत्त्वमस्यादि वाक्यार्थानां तद्बोधकश्रुतीनाञ्चापि विषयत्वात्। न च भ्रमपरिकल्पितत्वेन मिथ्याभूतमपि तत्त्वमसीति शास्त्रमद्वितीयमखण्डं ब्रह्म बोधयति। यथा स्वप्नदृश्यमानं वस्तु 'तदा यं स्वप्नः' इति स्वाप्निकज्ञानं निवर्तयति, अत्रायमपि स्वप्न इति बाधादर्शनवत् तत्रापि—अखण्डब्रह्मबोधकवाक्यस्थलेऽपि पश्चाद् बाधवाक्यादर्शनमिति ब्रह्म सुस्थितमेवाविद्याकृतं सर्वं निवर्तत इति यदुच्यते, तदप्ययुक्तम्, शून्यमेव तत्त्वमिति वाक्येन तस्यापि तत्त्वमस्यादिश्रुतिबोधितार्थस्यापि बाधितत्वात्, निवर्तकज्ञानविषयतयाऽसत्यत्वात्। सर्वं शून्यमिति वाक्यं भ्रान्तिमूलकमिति न प्रमाजनकं चेत्, तत्त्वमस्यादिवाक्यमपि भ्रान्तिमूलमित्यविशेषात् 'न प्रमाजनकं भवेत्' इति त्वयैवोक्तम्। निर्विशेषचिन्मात्रातिरिक्तं सर्वं मिथ्येति वाक्येन पश्चात्तनबाधादर्शनं तु सर्वशून्यवाक्यस्यैवेति विशेषः। तत्त्वमस्यादिवाक्ये सर्वं शून्यमिति बाधदर्शनम्। सर्वशून्यवाक्ये बाधादर्शनमिति विशेषः। अनेन भवदीयतर्केण शून्यतत्त्वमेव स्थास्यति। श्रुतिवाक्येऽपौरुषेयत्वान्न भ्रान्तिमूलकत्वं सर्वशून्यवाक्ये पौरुषेयत्वात्तदस्ति, इत्यपि न, पौरुषेयापौरुषेयत्वयोर्भ्रान्तिमूलत्वेनोभयोस्तुल्यत्वात्।

सर्वशून्यवादिनो ब्रह्मव्यतिरिक्तवस्तुमिथ्यात्ववादिनश्च स्वपक्षस्थापनप्रमाणपारमार्थ्यानभ्युपगमेनाभियुक्तैर्वादानधिकार एव प्रतिपादितः। अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः।

अपि च प्रत्यक्षदृष्टस्य प्रपञ्चस्य मिथ्यात्वं केन प्रमाणेन साध्यते? प्रत्यक्षस्य दोषमूलत्वेनान्यथासिद्धिसम्भवान्निर्दोषं शास्त्रमनन्यथासिद्धं प्रत्यक्षस्य बाधकमिति चेत्, केन दोषेण जातं प्रत्यक्षमनन्तभेदविषयमिति वक्तव्यम्, अनादिभेदवासनाख्यदोषजातं प्रत्यक्षमिति चेत्, हन्त! तर्हि, अनेनैव दोषेण जातं शास्त्रमपीत्येकदोषमूलत्वात् प्रत्यक्षशास्त्रयोर्न बाध्यबाधकभावसिद्धिः। आकाशवाय्वादिभूततदारब्धशब्दस्पर्शादियुक्तमनुष्य-

---

किञ्च, तत्त्वमस्यादिवाक्यमप्रमाणम्, भ्रान्तिमूलत्वादिति प्रयोगे सर्वशून्यवाक्यस्य पौरुषेयत्वं वदता भ्रान्तिमूलत्वहेतोः को हेत्वाभास उक्तः? पौरुषेयत्वमुपाधिश्चेद्वाक्यनिष्ठाप्रामाण्ये पौरुषेयत्वस्योपाधित्वाभावात्। यत्र वाक्यनिष्ठाप्रामाण्यं तत्र पौरुषेयत्वमित्यस्य सत्त्वेऽपि यत्र पौरुषेयत्वं तत्राप्रामाण्यमिति व्याप्तेराप्तवाक्ये व्यभिचारेण साध्यसमव्याप्तेरभावात्। सर्वशून्यवादिनो ब्रह्मव्यतिरिक्तवस्तुमिथ्यात्ववादिनश्च स्वपक्षस्थापनप्रमाणसत्यत्वास्वीकारेणाविशेषादुभयोर्न वादाधिकारः। अयमर्थः कुमारिलभट्टाचार्यैरभियुक्तैराप्तवृद्धत्वेन वैदिकगोष्ठिप्रथमपरिगणितैः प्रतिपादितः। तथा हि—सर्वदा सदुपायानां वादमार्गः प्रवर्तते। अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः। शून्यवादिपदेन प्रमाणपारमार्थ्यानभ्युपगमसाधर्म्येणोभयोर्मिथ्यावादिशून्यवादिनोः परिग्रहः।

प्रत्यक्षदृष्टभेदज्ञानं शास्त्रजन्याभेदज्ञानेन बाध्यत इति तदभिमतः प्रत्यक्षशास्त्रयोर्बाध्यबाधकभावस्तन्निरसितुमारभते—अपि चेति। प्रत्यक्षदृष्टस्य प्रपञ्चस्य विविधविचित्रभेदस्य मिथ्यात्वमसत्यत्वं केन प्रमाणेन साध्यते? प्रत्यक्षस्य दोषमूलत्वेनानादिभेदवासनामूलत्वेनान्यथासिद्धिसम्भवात्। भेदवासनादोषजन्यत्वाद् निर्दोषशास्त्रमपौरुषेयत्वेन दोषसम्बन्धलेशविधुरमनन्यथासिद्धं शास्त्रं बाधकमिति चेत्, केन दोषेण जातं प्रत्यक्षमनन्तभेदविषयमनादिभेदविषयकवासनाख्यदोषेण जातम्। वासनाया अनादित्वं पूर्वपूर्वभेदभ्रमजन्यत्वेनोत्तरोत्तरवासनायाः पूर्वपूर्ववासनाध्वंससामानाधिकरण्येन तिमिरकाचादीनां न तद् दोषत्वम्, घटपटादिभेदपूर्वत्वाभावेन निखिलभेदमूलत्वाभावेनाननुगतत्वात्। हन्त! तर्ह्यनेनैव दोषेण अनादिभेदवासनाख्यदोषेण शास्त्रमपीत्येकदोषमूलत्वात् प्रत्यक्षशास्त्रयोर्न बाध्यबाधकभावसिद्धिः।

त्वादिसंस्थानसंस्थितपदार्थग्राहिप्रत्यक्षं शास्त्रं तु प्रत्यक्षाद्यपरिच्छेद्यसर्वान्तरात्मत्वसत्यत्वाद्यनन्तविशेषणविशिष्टब्रह्मस्वरूपतदुपासनाद्याराधनप्रकारतत्प्राप्तिपूर्वकतत्प्रसादलभ्यफलविशेषतदनिष्टकरणमूलनिग्रहविशेषविषयमिति शास्त्रप्रत्यक्षयोर्न विरोधः। अनादिनिधनाविच्छिन्नपाठसम्प्रदायताद्यनेकगुणविशिष्टस्य शास्त्रस्य बलीयस्त्वं वदता प्रत्यक्षपारमार्थ्यमवश्यमभ्युपगन्तव्यम्, इत्यलमनेन श्रुतिशतविततिवितानवेगपराहतकुदृष्टिदुष्टयुक्तिजालतूलनिरसनेनेत्युपरम्यते।

---

अपि च प्रत्यक्षशास्त्रयोर्भिन्नविषयत्वादपि न विरोधकथाऽवसरः, प्रत्यक्षमाकाशवाय्वादिभूततदारब्धशब्दस्पर्शादिरूपरसगन्धादियुक्तमनुष्यत्वादिसंस्थानमनुष्याद्याकारविशेषसंस्थिततद्विशिष्टपदार्थचराचरग्राहि, तद्विषयकं प्रत्यक्षं शास्त्रं तु प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते। "एनं वदन्ति वेदेन सैव वेदस्य वेदता" इति प्रमाणेन प्रत्यक्षाद्यपरिच्छेद्यसर्वान्तरात्मत्वसत्यत्वाद्यनन्तविशेषणविशिष्टब्रह्मस्वरूपतदुपासनाद्याराधनप्रकारतत्प्राप्तिपूर्वकतत्प्रसादादिविषयकम्, तत्र प्रत्यक्षापरिच्छेद्यत्वं प्रत्यक्षादिप्रमाणगम्यत्वं सर्वान्तरात्मत्व-सर्वान्तर्यामित्वं सत्यत्वं प्रमेयत्वमनन्तदेशकालवस्तुपरिच्छेदभेदविशेषतत्तद्देशादिवृत्तित्वरहितं तदुपासनं तद्ध्यानं यागादयो ज्योतिष्टोमादय आदिर्यद् ग्राह्यास्तत्प्रकार इतिकर्तव्यता तत्प्राप्तिर्मोक्षस्तत्पूर्वकभगवत्प्रसादो भगवत्प्रसादातिशयो मुक्तजीवसम्बन्धकृतः, अथवा यागादिजन्यभगवत्प्रसादकृतफलविशेषा अर्थधर्मकामास्तदनिष्टं पापं तत्करणमूलकनिग्रहो दण्डविशेषः। इत्थं यथापराधदण्डविशेषविषयकबोधजनकमिति शास्त्रप्रत्यक्षयोर्न विरोधः।

अपि च शब्दप्रमाणस्य प्रमाजनकतायां शब्दस्वरूपग्रहणस्य व्युत्पत्तेः, शक्तिग्रहस्य तात्पर्यलिङ्गस्योपक्रमादेरपौरुषेयत्वादेरनुमानलिङ्गस्य च प्रत्यक्षसिद्धतया सहायत्वेन प्रत्यक्षप्रमाणस्य पारमार्थ्यानभ्युपगन्तृभिरपि प्रत्यक्षस्य पारमार्थ्यमभ्युपगन्तव्यमेव। अतोऽनादिनिधनमुत्पत्तिविनाशरहितं गुर्वध्ययनपूर्वकत्वनाशरहितत्वमविच्छिन्नपाठसम्प्रदायत्वं वेदानां न प्रत्यक्षेण बाध्यबाधकभावः, भिन्नविषयत्वात्, तत्र सहायत्वाच्च। अयमद्वैतसिद्धान्तः कुदृष्टिदुष्टयुक्तिजालतूलावलम्बितः। स च श्रुतिशतं शाखाभेदो विततिः प्रतिशाखं शाखां शाखां प्रति वाक्यपरम्परारूपवातवेगपराहतोऽतस्तन्निरसनं निष्फलम्, श्रुतिशतेन नितरामुड्डीयमानत्वादत उपरम्यते।

अथ भास्करमतनिराकरणम्—

द्वितीये पक्षे तूपाधिब्रह्मव्यतिरिक्तवस्त्वन्तरानभ्युपगमाद् ब्रह्मण्येवोपाधिसंसर्गादौपाधिकास्सर्वे दोषा ब्रह्मण्येव भवेयुः । ततश्चापहतपाप्मत्वनिर्दोषत्वश्रुतयः सर्वा विहन्यन्ते । यथा घटाकाशादेः परिच्छिन्नतया महाकाशादि वैलक्षण्यं परस्परभेदश्च दृश्यते, तत्रस्था गुणा वा दोषा वाऽनवच्छिन्ने महाकाशे न सम्बद्ध्यन्ते, एवमुपाधिकृतभेदव्यवस्थितजीवगता दोषा अनुपहते परे ब्रह्मणि न सम्बद्ध्यन्ते इति चेत्, नैतदुपपद्यते, निरवयवस्याकाशस्यानवच्छेद्यस्य घटादिभिश्छेदासम्भवात् । तेनैवाकाशेन घटादयः संयुक्ता इति ।

---

ब्रह्माज्ञानवादिशाङ्करपक्षो निरस्तः, भास्करो हि उपाधिप्रकृतिसत्यत्ववादी, तन्मते उपाधिमिथ्यात्वप्रयुक्तानुपपत्तयो न सन्ति; किन्तु ब्रह्मणो भिन्नस्योपाधेर्भिन्नस्य च कस्यचिद् वस्त्वन्तरस्यानभ्युपगमात् । जीवसत्यत्ववादिमते जीवस्य प्रकृतिसंसर्गकृताविद्यास्मितादयो रागद्वेषाभिनिवेशकृतपापपुण्यदुःखसुखादयो दोषा यथा, तथा ब्रह्मण उपाधिसंसर्गेणाविद्याऽस्मितादयो दोषा आपद्येरन्, तेनापहतपाप्मत्वादिनिर्दोषश्रुतिगणो विहन्यते । न च यथा घटावच्छिन्नाकाशकरकावच्छिन्नाकाशयोरल्पत्वमभिमतकार्यविशेषविनियोगानर्हत्वं दोषः । घटावच्छिन्नाकाशेन साध्यं कार्यं करकावच्छिन्नाकाशेन न, करकावच्छिन्नेन साध्यं घटावच्छिन्नेन नेति । अनर्हत्वं स्वमहत्त्वापेक्षयाऽल्पत्वञ्च दोषः, कार्यविशेषविनियोगार्हत्वं महत्त्वञ्च गुणः । घटेन स्वसाध्यकार्यविशेषो निष्पाद्यते स्वलघुपात्रापेक्षया महत्त्वमप्यस्तीति गुण इत्युभयं न महाकाशे प्रसजति यथा, तथा ब्रह्मणि उपाधिपरिच्छिन्नब्रह्मात्मकजीवापतितनिरुक्तदोषा अनवच्छिन्नेन स्युरिति न निर्दोषश्रुतिविरोध इति वाच्यम्, उरगक्षताऽङ्गुलिवद् ब्रह्म यदि खण्डनार्हः स्यात्, तदोपाधिपरिच्छिन्नातिरिक्तभागस्य निर्दोषता सम्भवेत् । ब्रह्मणस्तु निरवयवत्वेनोपाधियोगस्य ब्रह्मप्रदेशानियमेन सर्वत्र ब्रह्मणि उपाधिकृतदोषवत्त्वप्रसङ्गात् । आकाशस्यापि निरवयवस्य न घटेन परिच्छेदः; अपि तु आकाशेनैव घटस्य संयुक्तता, न हि केनचिदाकाशभागेन, तथा ब्रह्मैवोपाधियोगिनो ब्रह्मभागः ।

न च घटावच्छिन्नाकाशप्रदेशात् करकावच्छिन्नाकाशप्रदेशो भिन्न इति वाच्यम्, आकाशस्यैकस्यैव प्रदेशभेदेन घटादिसंयोगात् । घटादौ गच्छति देशान्तरं याति सति आकाशे घटप्रदेशनियमाभावाद् इति आकाशमात्रं घटसंयोगि तथा ब्रह्मणि उपाधिप्रदेशनियमाभावेन ब्रह्मण्येवोपाधियोग उपाधौ गच्छति, पुण्यविशेषात् । तस्मिन्नेवोपाधिसंसर्गविभागकृतौ बन्धमोक्षौ । क्षणे क्षणे स्यातामिति सन्तः । ब्रह्मज्ञानादपुनरावृत्ति-

ब्रह्मणोऽप्यच्छेद्यत्वाद् ब्रह्मैवोपाधिसंयुक्तः स्यात् । घटसंयुक्ताकाशप्रदेशोऽन्यस्मादाकाशप्रदेशाद् भिद्यते चेत्, आकाशस्यैकस्यैव प्रदेशभेदेन घटादिसंयोगाद् घटादौ गच्छति । तस्य प्रदेशस्यानियम इति तद्वद् ब्रह्मण्येव प्रदेशभेदानियमेनोपाधिसंसर्गादुपाधौ गच्छति । संयुक्तवियुक्तब्रह्मप्रदेशभेदाच्च ब्रह्मण्येवोपाधिसंसर्गः क्षणे क्षणे बन्धमोक्षौ च स्यातामिति सन्तः परिहसन्ति । निरवयवस्यैवाकाशस्य श्रोत्रेन्द्रियत्वेऽपि इन्द्रियव्यवस्थावद् ब्रह्मण्यपि व्यवस्थोपपद्यत इति चेत्, न, वायुविशेषसंस्कृतकर्णप्रदेशसंयुक्तस्यैवाकाशप्रदेशस्येन्द्रियत्वात् । तस्य च प्रदेशान्तराद् भेदानियमेऽपि इन्द्रियव्यवस्थोपपद्यते । आकाशस्य तु सर्वेषां शरेषु गच्छत्सु सर्वप्रदेशसंयोग इति ब्रह्मण्युपाधिसंयोगप्रदेशानियम एव । आकाशस्य स्वरूपेणैव श्रोत्रेन्द्रियत्वमभ्युपगम्यापीन्द्रियव्यवस्थोक्ता, परमार्थतस्तु आकाशो न श्रोत्रेन्द्रियम् ।

---

मोक्षं मन्तारो परिहसेयुः । ननु कर्णशष्कुल्यवच्छिन्नाकाशस्यैव श्रोत्रियेन्द्रियत्वेनाकाश एव प्रदेशभेदेन इन्द्रियानिन्द्रियव्यवस्थावद् ब्रह्मण्यपि जीवब्रह्मव्यवस्था सम्भवेदिति वाच्यम्, वायुविशेषसंस्कृतकर्णप्रदेशसंयुक्ताकाशस्य श्रोत्रपदार्थत्वात् । आकाशप्रदेशभेदानियमेऽप्ययमाकाशदेशः कर्णशष्कुलिसंयुक्त इति नियमाभावेऽपि इन्द्रियव्यवस्थोपपद्यते । आकाशस्यैवेन्द्रियानिन्द्रियव्यवस्थोपपद्यते । एकस्यैव पुरुषस्य वायुविशेषसंस्कृतकर्णशष्कुलिसंयुक्ताकाशप्रदेशविशेषस्योपलब्धिजनकत्वमपरस्य प्रदेशस्य नेति व्यवस्था सिद्ध्यतीति भावः । चैत्रीयसंस्कृतपवनसंयोगविशिष्टकर्णशष्कुलिसंयुक्ताकाशप्रदेशस्य चैत्रनिष्ठशब्दसाक्षात्कारजनकस्य न मैत्रीयश्रोत्रत्वमिति चैत्रमैत्रश्रोत्रव्यवस्था, उपाधीनां चलत्वादाकाशस्य ब्रह्मणश्चैकत्वात् । ब्रह्मण्युपाधिसंसर्गस्यानियतत्वेन सर्वप्रदेशः कालभेदेनोपाधिसंयोगीति ब्रह्मणो जीवत्वापत्त्या सकलजीवगतदोषप्रसङ्गेन निर्दोषत्वश्रुतिविरोधः । तस्यैव ब्रह्मप्रदेशस्योपाधिसंयोगक्षणे बन्धो वियोगकाले मोक्ष इत्युच्यते । तदा बन्धमोक्षस्याव्यवस्थानुपपत्तिरनावृत्तिसूत्रश्रुतिविरोधश्च । सर्वस्याकाशप्रदेशस्योक्तविशेषणविशिष्टस्य शब्दसाक्षात्कारजनकतावस्थायामिन्द्रियत्वेन कश्चिद्विरोध इति । इयं समाधानं श्रोत्रस्य स्वरूपत आकाशरूपत्ववादिवैशेषिकमतेन, श्रोत्रस्य सात्त्विकाहङ्कारपरिणामत्ववादिवैदिकमते तु न कश्चिद्दोषावकाशः ।

वैकारिकादहङ्कारादेकादशेन्द्रियाणि जायन्त इति वैदिकाः। यथोक्तं भगवता पराशरेण—

तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश।
एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः॥

इत्ययमर्थो वैकारिकस्तैजसोद्भूतादिरिति त्रिविधोऽहङ्कारः। स च क्रमात् सात्त्विको राजसस्तामसश्च। तत्र तामसोद्भूतादाकाशादीनि जायन्त इति सृष्टिक्रममुक्त्वा तैजसाद् राजसाहङ्कारादेकादशेन्द्रियाणि जायन्त इति परमतमुपन्यस्य सात्त्विकाहङ्काराद् वैकारिकाणीन्द्रियाणि जायन्त इति स्वमतमुच्यते—देवा वैकारिकाः स्मृता इति। देवा इन्द्रियाणि, एवमिन्द्रियाणामाहङ्कारिकाणां भूतैश्चाप्यायनं महाभारत उच्यते। भौतिकत्वेऽपीन्द्रियाणामाकाशादिभूतविकारत्वादेवाकाशादिभूत-परिणामविशेषा व्यवस्थिता एव। शरीरवत् पुरुषाणामिन्द्रियाणि भवन्तीति ब्रह्मण्यच्छेदे निरवयवे निर्विकारे त्वनियमेनानन्तहेयोपाधिसंसर्गदोषो दुष्परिहर एवेति श्रद्दधानानामेवायं पक्ष इति शास्त्रविदो न बहु मन्यन्ते। स्वरूपपरिणामाभ्युपगमादविकारत्वश्रुतिर्बाध्यते। निरवद्यता च ब्रह्मणो

---

वस्तुतस्तु श्रोत्रं नाकाशरूपम्; अपि तु सात्त्विकाहङ्कारपरिणामः, तथा च न ब्रह्मणो दृष्टान्तत्वयोगो हि श्रोत्रस्याहङ्कारिकत्वे प्रमाणम्, पराशरो हि उक्तवान्—

तैजसानीन्द्रियाण्याहुः देवा वैकारिका दश।
एकादशम्मनश्चात्र देवा वैकारिकाः स्मृताः॥

अत्र भगवान् पराशरः तामसादहङ्कारादाकाशस्य वाय्वादेश्चोत्पत्तिमुक्त्वा तैजसादहङ्कारादेकादशेन्द्रियाणामुत्पत्तिरिति परमतमुपन्यस्य 'देवा वैकारिकाः स्मृताः' इति स्वमतं ब्रूते। तत्र देवपदेनेन्द्रियाणां ग्रहणम्, आहङ्कारिकाणामिन्द्रियाणां भूतै-राप्यायनं पोषणं भारत उच्यते। इममाशयमबुद्ध्वा वैशेषिको भूतविकारत्वमिन्द्रि-याणामाह। श्रोत्रस्याकाशरूपत्वे पूर्वं परिहार उक्तः, इदानीमाकाशविकारत्वेऽपि परिहारं ब्रूते। यथा शरीरस्य पृथ्वीपरिणामत्वे शरीरव्यवहारः, तथाकाशस्य परि-णामत्वे श्रोत्रेन्द्रियत्वं न विरुद्ध्यते। जीवस्य ब्रह्मपरिणामत्वाभावाद् न जीवब्रह्म-व्यवस्था सम्भवति। एवञ्चाभेदेऽच्छेदे निरवयवे ब्रह्मणि उपाधिसंसर्गदोषो दुष्परिहर

बाध्यते। ब्रह्मणः शक्तिः परिणाम इति चेत्, केयं शक्तिरुच्यते? किं ब्रह्मपरिणामरूपा? उत ब्रह्मणोऽनन्या कापि? उभयपक्षेऽपि स्वरूपपरिणामोऽवर्जनीय एव।

अथ यादवप्रकाशमतनिराकरणम्—

तृतीयेऽपि पक्षे जीवब्रह्मणोर्भेदवदभेदस्य चाभ्युपगमात्, तस्य च तद्भावात् सौभरि भेदवत् स्वावतारभेदवच्च सर्वस्येश्वरभेदत्वात् सर्वे जीवगता दोषास्तस्यैव स्युः।

ईश्वरः स्वरूपेण सुरनरतिर्यक्स्थावरादिभेदेनावस्थित इति हि तदात्मकत्ववर्णनं क्रियते, तथासति एकमृत्पिण्डारब्धघटशरावादिगतान्युदकाहरणादीनि सर्वकार्याणि यथा तस्यैव भवन्ति, एवं सर्वजीवगतसुखदुःखादि-

---

एव। स्वरूपपरिणामत्वे निर्विकारत्वश्रुतिर्बाध्यते, निरवद्यता च बाध्यते। यदि ब्रह्मणः शक्तिपरिणाम उच्यते, तदा केयं शक्तिरुच्यते? ब्रह्मपरिणामस्वरूपा ब्रह्मस्वरूपा वेत्युभयथापि स्वरूपपरिणामोऽवर्जनीय एव।

भास्करमते 'सर्वं खल्विदं ब्रह्म" इत्यादि श्रुत्या अचितोऽपि ब्रह्माभिन्नत्वस्य वेदाद् बोधनात्। ब्रह्माचितोरभेदः स्वाभाविकः, ब्रह्मणि निर्विकारत्वश्रुतेरचिति सविकारत्वोक्तेस्तयोर्भेदोऽपि स्वाभाविकः। मुक्तावभेदश्रुतेर्जीवब्रह्मणोरभेदः स्वाभाविकः। संसारावस्थायामुपाधिवशाद् जीवितावस्थायां "द्वा सुपर्णा सयुजा सखायौ" इति भेदोक्तेस्तयोर्भेद औपाधिकः। यादवप्रकाशमते ब्रह्मणा जीवस्याचितश्च श्रुतिभिर्भेदाभेदवचनात् त्रयाणां भेदाभेदौ स्वाभाविकौ। अस्मिन् तृतीयमते ब्रह्मणा जीवेनाभेदस्याभ्युपगमात्। तस्य ब्रह्मणो जीवभावाद् यथा सौभरि जीव एको विभिन्नशरीरयोगाद् अनेकतामुपगतः, एक ईश्वरः स्वावतारकृतविविधदेहयोगादनेकतामुपगतः, तथा ब्रह्मैव सर्वजीवानां सर्वाचिद्विकारतामुपगत इति जीवगता दोषा अचिद्गतविकाराश्च ब्रह्मण एव स्युरिति।

भेदमात्रवादिमते जीवाद्भेदे सति जीवगता दोषा न ब्रह्मणि, तथा मयाऽपि जीवे ब्रह्मणः स्वाभाविकभेद उच्यत इति नोक्तदोषावकाशः। अभेदेऽपि नास्माकं पक्षे दोषो भवतापि जीवेन ब्रह्मणा स्वाभाविकाभेदाङ्गीकारेण यश्चोभयोर्दोषः, परिहारस्तयोः सम इति न्यायेन दोषदानानौचित्यात्। अपि च ब्रह्मण एवाचिज्जीवेश्वरा अंशास्तेन यथा मृद्विकारयोर्घटशरावयोर्न परस्परं गुणदोषसङ्करः। तथा ब्रह्मांशयोर्जीवेश्वरयोर्न परस्परं गुणदोषसङ्करः, इत्याशङ्कायामेतदुक्तं भवति—जीवस्य स्वरूपत

सर्वमीश्वरगतमेव स्यादिति। घटकरकादिसंस्थानानुपयुक्तं द्रव्यं यथा कार्यान्तरानन्वितम्, एवमेव सुरपशुमनुजादि जीवत्वानुपयुक्त ईश्वरः सर्वज्ञः सत्यसङ्कल्पत्वादिकल्याणगुणाकर इति चेत्, सत्यम्, स एवेश्वर एकेनांशेन कल्याणगुणाकरः, स एवान्येनांशेन हेयगुणाकर इत्युक्तम्, द्वयोरंशयोरीश्वरत्वाविशेषात्। द्वावंशौ व्यवस्थिताविति चेत्, कस्तेन लाभः? एकस्यैवैकेनांशेन नित्यदुःखित्वाद् अंशान्तरेण सुखित्वमिति नेश्वरत्वाय कल्पते। यथा देवदत्तस्यैकस्मिन् हस्ते चन्दनपङ्कानुलेपः केयूरकटकाङ्गुलीयालङ्कारम्, तस्यैवान्यस्मिन् हस्ते मुद्गराभिघातः कालानलज्वालानलप्रवेशश्च, तद्वदेवेश्वरस्य स्यादिति ब्रह्माज्ञानपक्षादपि पापीयानयमभेदाभेदपक्षोऽपरिमितदुःखस्य, तन्मते ब्रह्मणि पारमार्थिकत्वात्, संसारिणामनन्तत्वेन दुस्तरत्वाच्च। तस्माद् विलक्षणोऽयं जीवांश इति चेत्, आगतोऽसि मदीयं पन्थानम्। ईश्वरस्य स्वरूपेण तादात्म्यवर्णने स्यादयं दोषः, आत्मशरीरभावेन तु तादात्म्यप्रतिपादने न कश्चिद् दोषः; प्रत्युत निखिलभुवननियमनादिर्महानयं गुणगणः प्रतिपादितो भवति। सामानाधिकरण्यञ्च मुख्यवृत्तम्।

---

एवेश्वरपरिणामता, न तु ईश्वरांशत्वम्। एवञ्च स्वरूपत ईश्वरपरिणामत्वात् सुरनरादिदेहविशिष्टजीवानां घटशरावादिगतकार्यभागित्वं यथा मृदस्तथा सुरनरादिगता दोषा ब्रह्मण एव स्युः। न च घटशरावादिसंस्थानशून्यं मृद्द्रव्यं घटादिकार्यानन्वितम्, तथा सुरनरादि संस्थानानालिङ्गितं ब्रह्म जीवगतदोषगुणरहितमिति सत्यसङ्कल्पत्वाद्यनन्तगुणविशिष्टमिति वाच्यम्, एकस्यैव ब्रह्मणोंऽशभेदेन दुःखयोगित्वं निर्दोषत्वं नेश्वरत्वाय स्यात्।

ईश्वरो हि दोषशून्यत्वसमानाधिकरणानन्तकल्याणगुणवान्। यथा देवदत्तस्य दक्षिणहस्ते चन्दनलेपः, वामहस्ते कालानलज्वालानलप्रवेश इति यादवप्रकाशपक्षो ब्रह्माज्ञानाद्वैतवादिशङ्करपक्षादपि पापीयान्, अचिता ब्रह्मणः स्वाभाविकाभेदाङ्गीकारेणापरिमितदुःखानां पारमार्थिकानामीश्वरे स्वीकारात्। संसारिणां बद्धानां जीवानामनन्तत्वेन जीवस्य दुस्तरत्वापत्तिः मोक्षत्वानुपपत्तिः, तस्माद्यदि ब्रह्मजीवयोः शरीरात्मभावेनाभेदः स्वीक्रियते, तदा न जीवगतदुःखस्य ब्रह्मण्यापत्तिः; प्रत्युत निखिलभुवननियमनादिगुणगणः प्रतिपादितो भवति। जीवस्य ब्रह्मशरीरत्वे ब्रह्मणो विविधशरीरकत्वधारणशक्तिः प्रतिपादिता भवति। सामानाधिकरण्यञ्च मुख्यवृत्तं 'तत्त्वमसि' इत्यत्र भिन्नसूक्ष्मचिदचिद्विशिष्टत्वस्थूलचिदचिद्विशिष्टत्वभेदे सति एकविशेष्यब्रह्मबोधकत्वात्।

अपि चैकस्य वस्तुनो हि भिन्नाभिन्नत्वं न सम्भवतीतीत्युक्तम् । घटस्य पटाद्भिन्नत्वे तस्मिन् अभावः, अभिन्नत्वे सति तस्य तस्मिन् भाव इत्येकस्मिन् काले चैकस्मिन्देशे चैकस्य हि पदार्थस्य युगपत् सद्भावोऽसद्भावश्च विरुद्धः । जात्यात्मना भावो व्यक्त्यात्मना चाभाव इति चेत्, जातेर्मुण्डेन व्यक्त्या चाभेदे सति खण्डे मुण्डस्यापि सद्भावप्रसङ्गः । खण्डेन जातेरभिन्नत्वे सद्भावः, भिन्नत्वेऽसद्भावः, अश्वे महिषत्वस्येव विरोधो दुष्परिहर एव, जात्यादेर्वस्तुसंस्थानतया वस्तुनः प्रकारत्वात् । प्रकारप्रकारिणोश्च पदार्थान्तरत्वम् । प्रकारस्य पृथक्सिद्ध्यनर्हत्वम्, पृथगनुपलम्भश्च । तस्य च संस्थानस्य चानेकवस्तुषु प्रकारतयाऽवस्थितिश्चेत्यादि पूर्वमेवोक्तम् ।

जात्यादेर्वस्तुसंस्थानतया वस्तुनः प्रकारत्वात् प्रकारप्रकारिणोश्च पदार्थान्तरत्वं प्रकारस्य पृथक्सिद्ध्यनर्हत्वम्, पृथगनुपलम्भश्च । तस्य च

---

एवं श्रुतेः स्वरूपतो जीवब्रह्मणोर्भेदाभेदपरत्वं दूषितम् । इदानीं सामान्येन सर्वस्य वस्तुनो भिन्नाभिन्नत्वं निरस्यति—अपि चेति । एकस्य वस्तुनः पटस्य घटादिभिन्नत्वस्याभिन्नत्वस्य च विरोधः जातिव्यक्त्योर्भेदाभेदविरोधः, इदमित्थमिति प्रतीतिभेदात् पूर्वं निर्विशेषवस्तुनिरासप्रकरणे प्रोक्तम् । घटस्य पटादभेदे भेदे च एकस्मिन् काले, एकस्मिन् देशे घटे पटभेदाभेदयोरापत्तिः । युगपद् एकस्मिन् देश एकस्य पदार्थस्य अन्यस्मिन् पदार्थे सद्भावासद्भावौ विरुद्धाविति वस्तुस्थितिः । यदि नीलघटपीतघटव्यक्त्योर्घटत्वजात्याऽभेदो नीलपीतव्यक्त्या भेद इत्युच्यते, तदपि न युक्तम्, खण्डगोव्यक्तौ जात्या गोत्वजात्या मुण्डव्यक्त्याऽभेदे तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायात् खण्डमुण्डव्यक्त्योरभेदापत्तौ खण्डत्वजातिर्मुण्डे मुण्डत्वजातिः खण्डे इति प्रसङ्गः स्यात् । न हि महिषेऽश्वत्वस्येव कदाचित् खण्डे मुण्डत्वसद्भावः । मूलतः छिन्नशृङ्गो मुण्डः, अंशतः छिन्नशृङ्गो गौः खण्डः ।

अयं गौरिति प्रत्यक्षे गोजात्या व्यक्त्या चाभेदभानाद् भेदाभेदयोरेकत्वसिद्धिरिति न वाच्यम्, प्रथमप्रतीतावपि गोत्वजातेर्गवि व्यक्तौ भेदस्यैव भानात् । गोत्वजातिगोव्यक्त्योः सहोपलम्भेन सह प्रतीत्योभयोरैक्यमित्यपि न । जातेः पृथक्सिद्ध्यनर्हत्वेन सहोपलम्भो न त्वैक्येन भेदे मतुप्प्रयोगदर्शनेन । अत्रायं गौरिति प्रयोगेण जातिवाचकेन गोशब्देन मतुपोऽदर्शनात्तयोरभेद इत्यपि न, पृथक्सिद्धविशेषणेष्वेव नियमो मतुप्प्रयोगस्य अपृथक्सिद्धविशेषणेषु गोत्वमपृथक्सिद्धविशेषणम्, अतोऽयं गौरिति प्रयोगः । एको गौरिति प्रतीत्या जातिव्यक्तिभेदाभाव इत्यपि न, तत्रैकप्रयोगस्य तद्देशे व्यक्त्यन्तरनिषेधपरत्वात् । सोऽयं गौरिति बुद्धिर्न जात्येकत्वनिबन्धनी; किन्तु अयमपि

संस्थानस्य चानेकवस्तुषु प्रकारतया अवस्थितिश्चेत्यादि पूर्वमेवोक्तम् । सोऽयमिति बुद्धिः प्रकारैक्यात्, अयमपि दण्डीति बुद्धिवत् ।

अयमेव जात्यादिः प्रकारो वस्तुनो भेद इत्युच्यते, तद्योग एव वस्तु-भिन्नमिति व्यवहारहेतुरित्यर्थः । स च वस्तुनो भेदव्यवहारहेतुः स्वस्य च, संवेदनवत् । यथा संवेदनं वस्तुनो व्यवहारहेतुः, स्वस्य व्यवहारहेतुश्च भवति । अत एव च सन्मात्रग्राहिप्रत्यक्षं न भेदग्राहीत्यादि वादा निरस्ताः, जात्यादिसंस्थानसंस्थितस्यैव वस्तुनः प्रत्यक्षेण गृहीतत्वात्, तस्यैव

---

दण्डी इतिवद् गवाकृतिसाम्यनिबन्धनी । यथा दण्डिविशेषीयदण्डादपरदण्डिनो दण्डस्य भिन्नत्वेऽपि दण्डस्वरूपसाम्यादयमपि दण्डीति प्रमोत्पद्यते, तथा गवासाधारणधर्मात् सास्नाविशेषात् गवान्तरीयसास्नाविशेषस्य भिन्नत्वेऽपि सास्नासाम्यात् सोऽयं गौरित्यनुगताकारप्रतीतिर्भवति । एतेन जात्या व्यक्तेरभेदे खण्डमुण्डव्यक्त्योः परस्परं धर्मापत्तिस्थापनेन मृत्त्वेन घटशरावयोरैक्यमभेद इति यादवप्रकाशाभिमतः पक्षः परास्तः ।

अयमेव जात्यादिः जातिगुणक्रियाद्रव्यात्मकः प्रकारः । अयं गौरयं शुक्लः, अयं पाचकः, अयं दण्डी प्रकारतया वर्त्तते भासते च । भेदरूपगोत्वजातिर्महिष्यादिभेदरूपः, शुक्लत्वं गुणः पटे रक्तपटादिभेदरूपः, पाचके पाकक्रिया पाठकादिभेदः । दण्डिनि दण्डो गृहस्थभेदः, गोत्वयोगः सम्बन्धः, महिषभेदवान् गौरिति व्यवहारहेतुः, शब्दप्रयोगहेतुः, प्रतीतिहेतुः, प्रवृत्तिनिवृत्तिहेतुश्च । स च जात्यादि. गोत्वादिः वस्तुनो महिषादेर्भेदव्यवहारहेतुः, स्वस्य जात्यादेर्महिषादिभिन्नो गोत्वादिरिति व्यवहारस्यापि हेतुः । इदमुक्तं भवति—गोत्वं यथा महिषभेदस्तथा गोत्वे महिषभेदोऽपि गोत्वमेव, न धर्मान्तरम् । संवेदनवद् ज्ञानवद् घटादिप्रत्यक्षं यथा घटः प्रत्यक्षः, प्रत्यक्षमपि प्रत्यक्षमित्युभयोर्व्यवहारयोः स्वयमेव हेतुः । तस्मात् प्रथमं घटत्वविशिष्टप्रत्यक्षम्, घटत्वस्य स्वेतरभेदरूपत्वेन भेदग्राहि परस्परभिन्नं यद्घटत्वजातिव्यक्तिः, व्यक्ति-भिन्नं घटत्वं घटत्वरूपं घटत्वभिन्ना व्यक्तिर्व्यक्तिरूपा । इत्थं भेदग्राहि तत्, नाभेदग्राहि, अर्थात् सन्मात्रग्राहि न वा भेदाभेदग्राहि । तेन शाङ्करपक्षो यादवप्रकाश-भास्करपक्षौ च परास्ताः । जातिः संस्थानमसाधारणधर्मो न पदार्थान्तरम् । विभिन्नव्यक्तिषु घटोऽयं घटोऽयमिति अनुवृत्ताकारप्रतीतिः सादृश्यनिबन्धना, न जात्येकत्वनिबन्धना । तादृशसंस्थानसंस्थितस्यैव घटादेः प्रत्यक्षेण ग्रहणम्, संस्थान-स्यैव प्रतियोग्यपेक्षायां भेदव्यवहारहेतुत्वम् । घटसंस्थानस्य पटभेदशब्देन

संस्थानरूपजात्यादेः भेदव्यवहारहेतुत्वाच्च । स्वरूपपरिमाणमदोषश्च पूर्वमेवोक्तः ।

यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद, यस्य पृथिवी शरीरम्, यः पृथिवीमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः, य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद, यस्यात्मा शरीरम्, य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः,यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरं यं पृथिवी न वेदेत्यादि । योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद, यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यं मृत्युर्न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः । द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्व-

---

विवक्षायां प्रतियोग्यपेक्षा घटशब्देन घटत्वशब्देन च विवक्षायां न प्रतियोग्यपेक्षेत्यत्र शब्दस्वभावो मूलम् । यथा दारशब्दः स्त्रियाः पुंस्त्वं वक्ति, न स्त्रीशब्दस्तथाऽप्शब्दो जलगतस्त्रीत्वं वक्ति, न जलशब्द इति । इत्थं ब्रह्मणोऽचिता स्वरूपतोऽभेदे निर्विकारत्व-श्रुतिविरोधः पूर्वं प्रतिपादितः ।

'अशेषचिदचिद्वस्तुशेषिणे' इति श्लोकार्थं विस्तरेण प्रतिपादयितुं तत्त्वमसीति सामानाधिकरण्यस्यार्थं भेदश्रुतिघटकश्रुत्यविरोधेन विवक्षन् घटकश्रुतिमुदाहरति—यः पृथिव्यामिति काण्वशाखावाक्यम् । य आत्मनि तिष्ठन्नित्यादि माध्यन्दिनशाखा-वाक्यम् । वाक्यद्वयेन परमात्मनश्चिदचिदात्मत्वमुक्तम् । उभयोरपि भेदेनैनमधीयत इति सूत्रानुसारिणोभयवाक्यमुपात्तम् । श्रुतावमृतपदेनापहतपाप्मेति श्रुतिसिद्धार्थं उच्यते । परमात्मनश्चेतनाचेतनसंयुक्तत्वेऽपि दोषासंस्पृष्टत्वं द्वा सुपर्णेति श्रुतिगतेनानश्नन्नन्योऽभिचाकशीति वाक्येन स्पष्टीकृतम् । एतेनान्तर्यामिवाक्येन परमात्मनश्चेतना-चेतनात्मत्वमन्तर्यामित्वकृतं न स्वरूपकृतम्, चेतनाचेतनशब्दवाच्यत्वं चेतनानुप्रवेश-कृतं न चेतनाचेतनस्वरूपैक्यकृतम् । अनुप्रवेशश्च तत्सृष्ट्वा तदेवानुप्राविशत्तदनु-प्रविश्य सच्चत्यच्चाभवद् इति श्रुत्योच्यते । तदनुप्रवेशेऽपि तद्गतदोषास्पर्शमाह—सत्यं चानृतं च सत्यमभवत्, अप्रच्युतस्वभावमभवत् । अनेन जीवेनेति नामरूप-व्याकरणश्रुतेरपि भेदाभेदश्रुतिविरोधनिवर्तकत्वेन घटकत्वात्तामाह—अनेनेति । भोक्ता भोग्यं प्रेरितारञ्च मत्वेति भेदश्रुतिश्चिदचिदीश्वरतत्त्वत्रयं प्रतिपादयति—नित्यो नित्यानामिति जीवब्रह्मभेदं जीवानां परस्परभेदं प्रतिपादयति, जीवनित्य-त्वञ्च । इत्थं पूर्वोक्तश्रुतिगणेन तदाशयकश्रुतिशतेन च परस्य ब्रह्मणः सर्वात्मत्वमुक्तम्, तदुपबृंहणैश्च स्पष्टीकृतम् । उपबृंहणानि च—"जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधा-

जाते तयोरन्यः पिप्पलं स्वाद्रवत्तयनश्नन्नन्योऽभिचाकशीति, अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा, तत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य सच्च-त्यच्चाभवत्, इत्यादि। सत्यं चानृतं सत्यमभवत्। अनेन जीवेनात्मने-त्यादि, पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतमिति।

भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म एतत्।
नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्॥

"प्रधानक्षेत्रज्ञपतिर्गुणेशः", "ज्ञाज्ञौ द्वावजावीशनीशौ" इत्यादि श्रुति-शतैस्तदुपबृंहणैः—

"जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम्"।
"यत्किञ्चित् सृज्यते येन सत्त्वजातेन वै द्विज!।
तस्य सृज्यस्य सम्भूतौ तत्सर्वं वै हरेस्तनुः"॥
"अहमात्मा गुडाकेश! सर्वभूताशयस्थितः"[1]।
"सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च[2]"॥

इत्यादि वेदविदग्रेसरवाल्मीकिपराशरद्वैपायनवचोभिश्च परस्य ब्रह्मणः

---

तलम्" पृथिव्याः स्थिरस्वभावत्वं त्वदधीनमित्यर्थः। स्थैर्यं वसुधातलमिति सामाना-धिकरण्यं कार्यकारणयोर्भावाल्लाक्षणिकम्, यथा "अग्निः प्रकोपः प्रसादस्ते सोमः श्रीवत्स-लाञ्छनः" इत्यत्र अग्निकोपयोः प्रसादसोमयोः। सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्चेत्यादि रूपाणि।

ननु पूर्वोक्तश्रुत्या वाल्मीकिपराशरद्वैपायनपरमर्षिकृततदुपबृंहणवाक्यैश्च ब्रह्मणः सर्वात्मत्वे सर्वस्य शरीरत्वे प्रमितेऽपि तत्त्वमसि आत्मैवेदं सर्वं सर्वं खल्विदं ब्रह्मेत्यादिसामानाधिकरण्यस्योपपत्तिः कथमिति चेत्, न, शरीरस्य शरीरिणं प्रति प्रकारतयैव पदार्थत्वात्। देहवाचकशब्दाः प्रकारतया देहं विशेष्यतया ब्रह्मरूपं शरीरिणं प्रतिपादयन्तीति लोकप्रतीतिसाक्षिकम्। तथा हि ब्राह्मणोपजते क्षत्रियो-पजत इत्यत्र ब्राह्मण-क्षत्रियशब्दौ प्रकारतया कर्मोपलब्धस्वदेहं विशेष्यतया देहिन-मभिधत्ते। देहानभिधाने यजमानसाध्ययागीयक्रियानुपपत्तिरात्मानभिधानेऽदृष्टद्वारा स्वर्गादिफलभागितानुपपत्तिः।

न च प्रकृतिविकारजीवयोर्ब्रह्मशरीरत्वे धर्मभेदेऽपि जीवब्रह्मणोर्धर्मभेदेऽपि प्रकृतिब्रह्मणोर्धर्मभेदेऽपि महापातकितत्संसर्गिणोर्धर्मभेदेऽपि पातकिसंसर्गात्संसर्गिणो यथा पातकसंक्रमस्तथा ब्रह्मण्यपि संसर्गात् प्रकृतिजीवगता „पुरुषार्थान्वयः स्यादिति

---

१. श्रीमद्भगवद्गीता–१०।२०; २. तत्रैव—१५।१५।

सर्वस्यात्मत्वावगमाच्चिदचिदात्मकस्य वस्तुनस्तच्छरीरत्वावगमाच्च । शरीरस्य च शरीरिणं प्रति प्रकारतयैव पदार्थत्वात् शरीरशरीरिणोश्च तयोर्धर्मभेदेऽपि असङ्करात् सर्वशरीरं ब्रह्मेति ब्रह्मणो वैभवं प्रतिपादयद्भिः सामानाधिकरण्यादिमुख्यवृत्तैः सर्वचेतनाचेतनप्रकारं ब्रह्मैवाभिधीयते । सामानाधिकरण्यं हि द्वयोः पदयोः प्रकारद्वयमुखेनैकार्थनिष्ठत्वम् । तस्य चैतस्मिन् पक्षे मुख्यता, तथा हि तत्त्वमसीति सामानाधिकरण्ये तदित्यनेन जगत्कारणं सर्वकल्याण-

---

वाच्यम्, शरीरशरीरिणोर्धर्मभेदेऽपि तयोः शरीरशरीरिणोः संसर्गकृतपरस्परधर्मयोमिश्रणाभावात् सर्वत्रान्तर्यामिणो भगवतः सत्त्वेऽपि तदीयगुणा ज्ञानानन्दादयः संसर्गवैभवमात्रेण नोपश्लिष्यन्ति, तथा जीवप्रकृतिदोषा अपि तद्वैभवेनोपश्लिष्यन्ति । यथा विषसंकुलोरगगणयोगेन मलयचन्दनेन विषमात्रयोगः अन्तर्याम्यमृतः, अपहतपाप्मा विजरो विमृत्युः निष्कलं निरञ्जनम् इत्यादि निर्दोषघोषकश्रुतेश्च अविद्याऽस्मिताप्रयुक्तपापेन दुःखान्वयात्, ब्रह्मणि अविद्यायोगाभावाच्च, अनश्नन्नन्योऽभिचाकशीति श्रुतेश्च । एवं पूर्वोक्तश्रुतितदुपबृंहणैः सर्वशरीरं प्रतिपादयद्भिः तत्त्वमस्यादिश्रुतिवचनैर्मुख्यवृत्तैः सामानाधिकरण्यादिभिस्तत्त्वमिति इदं ब्रह्मेति आत्मा इदं सर्वमिति स्थूलचिदचिद्विशिष्टत्वसूक्ष्मचिदचिद्विशिष्टत्वरूपविभिन्नप्रवृत्तिनिमित्तकत्वसमानाधिकरणैकब्रह्मरूपविशेष्यार्थबोधकत्वरूपैस्तत्त्वमादिनिष्ठैः मुख्यार्थविषयकैर्यस्यात्मा शरीरं यस्य पृथिवी शरीरमित्यादिभिर्निष्कृष्टार्थपृथिव्यादिशरीरपरमात्मशरीरिविभिन्नविशेष्यकोपस्थितिजनकत्वसमानाधिकरणभेदसंसर्गकप्रतीतिजनकत्वरूपैर्वैयधिकरण्यैः पृथिव्यात्मादिनिष्ठैर्भगवद्वैभवविभुत्वप्रतिपादनपरैः सर्वचेतनाचेतनप्रकारं ब्रह्मैवाभिधीयते ।

सामानाधिकरण्यं परिष्करोति—तच्च महाभाष्यकारपतञ्जल्यादिसकलशिष्टसम्मतं प्रकारद्वयमुखेन द्वारा तत्प्रकारक एकार्थनिष्ठत्वमेकमुख्यविशेष्यकबोधजनकत्वम् । निरुक्तसामानाधिकरण्यस्यैतस्मिन् पक्षे स्वपक्षे मुख्यता स्वार्थवृत्तिता संकेतितार्थवृत्तितेति यावत् । प्रतिज्ञातमुपपादयति—तथा हीति । तत्त्वमित्यत्र तत्पदेन प्राच्यश्रुतिप्रोक्तं जगत्कारणं निरवद्यं सर्वकल्याणगुणाकरं ब्रह्मोच्यते । तत्समानाधिकरणवृत्तेन विशेष्यतया तदर्थशक्तेन त्वंपदेन जीवान्तर्यामिरूपि तच्छरीरं जीवशरीरकं जीवात्मतया स्थितं जीवप्रकारकं ब्रह्मोच्यते, अभिधया वृत्त्या बोध्यते । इत्थमुभयोः तत्त्वंपदयोर्जगत्कारणत्वसमानाधिकरणसर्वकल्याणगुणाकरत्वसमानाधिकरणनिरवद्यत्वेन प्रकारेण जीवशरीरकत्वविशिष्टजीवात्मत्वविशिष्टजीवप्रकारकत्वेन प्रकारेण चैकब्रह्मविशेष्यार्थबोधकत्वरूपं मुख्यं सामानाधिकरण्यं विशिष्टाद्वैतपक्ष उपपन्नम् ।

गुणाकरं निरवद्यं ब्रह्मोच्यते, त्वमिति च चेतनसमानाधिकरणवृत्तेन जीवान्तर्यामिरूपि तच्छरीरं तदात्मतयावस्थितं तत्प्रकारं ब्रह्मोच्यते, इतरेषु पक्षेषु सामानाधिकरण्यहानिर्ब्रह्मणः सदोषता च स्यात् ।

एतदुक्तं भवति—ब्रह्मैवमवस्थितमित्यत्रैवंशब्दार्थभूतप्रकारतयैव विचित्रचेतनाचेतनात्मकप्रपञ्चस्य स्थूलस्य सूक्ष्मस्य च सद्भावः । तथा च बहु स्यां प्रजायेय इत्ययमर्थः सम्पन्नो भवति । तस्यैवेश्वरस्य कार्यतया कारणतया च नानासंस्थानसंस्थितस्य संस्थानतया चिदचिद्वस्तुजातमवस्थितम् ।

ननु च संस्थानरूपेण प्रकारतयैवैवंशब्दार्थत्वं जातिगुणयोरेव दृष्टम्, न द्रव्यस्य । स्वतन्त्रसिद्धियोग्यस्य पदार्थस्यैवंशब्दार्थतयैवेश्वरस्य

---

इतरेषु पक्षेषु ब्रह्माज्ञानपक्षे भेदाभेदपक्षे च सामानाधिकरण्यहानिः, ब्रह्माज्ञानपक्षे निर्विशेषलक्षणायां प्रवृत्तिनिमित्ताभावेन सामानाधिकरण्यहानिः । द्वितीयपक्षे भास्कराचार्यपक्षे तच्छब्देनावगतस्य सर्वज्ञत्वादिधर्मस्य जीवे व्याघात इत्यादि वस्तुमात्रपरत्वे त्वंपदस्य सम्बोध्यरूपमुख्यार्थत्यागः स्यादिति । तृतीयपक्षे ब्रह्मणः स्वरूपतो जीवरूपेण परिणामे तच्छब्दवाच्यः सर्वज्ञत्वादिगुणगणविशिष्टः प्रकरणप्राप्त ईश्वरः त्वंपदवाच्य अल्पज्ञत्वादिविशिष्टजीव इति घटशरावयोरिव सामानाधिकरण्यानुपपत्तिः ।

ननु सृष्टेः प्राक् ब्रह्मण एकत्वावधारणाद् यतः प्रधानपुरुषा इत्युक्तेश्च प्राक् शरीरशरीरियोगाभावात् कथं ब्रह्मपदेन विशिष्टस्य ग्रहणम् ? अत आह—एतदुक्तं भवतीति । ब्रह्मैवमवस्थितमित्यत्र अवधारणवाक्य एवंशब्दार्थो वेदान्तवाक्यश्रुतसकलविशेषणानि विचित्रचेतनाचेतनप्रपञ्चरूपाणि स्थूलानि नामरूपविभागार्हाणि सूक्ष्माणि नामरूपविभागानर्हाणि । तथा च ब्रह्मणो नामरूपविभागार्हचिदचिद्विशिष्टरूपेण परिणामसङ्कल्पस्वीकार एव बहु स्यां प्रजायेयेति अयमर्थः सम्पन्नो भवति । तथावधारणे एकत्वावधारणेऽपि एवंशब्दार्थः सर्वपदार्थः सर्वं खल्विदमित्यत्र व्यक्तं विष्णुरित्यत्र नामरूपात्मकस्थूलप्रपञ्चः, तथाऽव्यक्तमित्यत्र सूक्ष्मचेतनाचेतनप्रपञ्चः । निमित्तकारणत्वं तदुपयोगिसर्वसत्त्वम्, उपादानत्वं स्वरूपत उपादानत्वस्य निर्विकारनिर्दोषश्रुतिविरोधेन सूक्ष्मचिदचिद्विशिष्टत्वं बोध्यम् । तस्यैवेश्वरस्य विशिष्टवेशस्य कार्यतया कारणतया च नानासंस्थानसंस्थितस्य संस्थानतया अपृथक्सिद्धधर्मतया चिदचिद्वस्तुजातमवस्थितमिति कार्यकारणयोरनन्यत्वमेकत्वं स्थितम् ।

संस्थानतया जातिगुणयोरेव प्रकारतयैवंशब्दार्थत्वम्, न तु द्रव्यस्येति न युक्तम्, कुण्डलिनि चैत्र एवं चैत्र इत्युच्यमाने कुण्डलस्य द्रव्यस्यैवैवंपदार्थत्वात् । ननु द्रव्यात्मक-

प्रकारमात्रत्वमयुक्तमिति चेत्, द्रव्यस्यापि दण्डकुण्डलादेर्द्रव्यान्तरप्रकारत्वं दृष्टमेव। ननु च दण्डादेः स्वतन्त्रस्य द्रव्यान्तरप्रकारत्वे मत्वर्थीयप्रत्ययो दृष्टः। यथा दण्डी कुण्डलीति, अतो गोत्वादितुल्यतया चेतनाचेतनस्य द्रव्यभूतस्य वस्तुन ईश्वरप्रकारतया सामानाधिकरण्येन प्रतिपादनं न युज्यते।

अत्रोच्यते—गौरश्वो मनुष्यो देव इति भूतसंघातरूपाणां द्रव्याणामेव देवदत्तो मनुष्यो जातः पुण्यविशेषेण, यज्ञदत्तो गौर्जातः पापेन कर्मणा, अन्यश्चेतनः पुण्यातिरेकेण देवो जात इत्यादि देवादिशरीराणां चेतनप्रकारतया लोकवेदयोः सामानाधिकरण्येन प्रतिपादनं दृष्टम्।

अयमर्थः—जातिर्वा गुणो वा द्रव्यं वा न तत्रादरः कश्चन। द्रव्यविशेषं प्रति विशेषणतयैव यस्य सद्भावस्तस्य तदपृथक्सिद्धेस्तत्प्रकारतया तत्सामानाधिकरण्येन प्रतिपादनं युक्तम्। यस्य पुनर्द्रव्यस्य पृथक्सिद्धस्यैव कदाचित् क्वचिद् द्रव्यान्तरप्रकारत्वमिष्यते, तस्य मत्वर्थीयप्रत्यय इति

---

स्वतन्त्रविशेषणवाचकपदानां मत्वर्थीयप्रत्ययं विना स्वसम्बन्धिद्रव्यान्तरपरत्वं न दृश्यते, तस्मात् चेतनाचेतनयोर्द्रव्ययोरीश्वरप्रकारतया सामानाधिकरण्येन चेतनाचेतनद्रव्यनिष्ठप्रकारतानिरूपितैकार्थेश्वरनिष्ठविशेष्यताकबोधजनकत्वेन तद्बोधकशब्दैः प्रतिपादनं बोधनं न युक्तम्।

गौरश्वो मनुष्यो देव इत्यादिसंघातानामेव द्रव्यरूपाणामेव, देवदत्तो मनुष्यो जातः पुण्येन कर्मणा, पशुर्जातः पापेन कर्मणा, अत्र देवदत्तशब्देन मनुष्याकारविशिष्टजीव उच्यते, पिण्डमात्रपरत्वे पुण्यान्वयानुपपत्तिस्तस्य चेतननिष्ठत्वात्। तेन भूतसंघातवाचकानां मनुष्यादिशब्दानां यथा भूतप्रकारकजीवविशेष्यकबोधजनकत्वम्, तथा तेषामपरेषामपृथक्सिद्धविशेषणवाचकशब्दानां चेतनाचेतनप्रकारकब्रह्मविशेष्यकबोधजनकत्वम्। अनेन जीवेनेत्यादि वेदान्तव्युत्पत्त्याऽवगम्यते।

जातिगुणाद्यन्यतमेषु यस्य कस्यचित् पदार्थं प्रति विशेषणतयैव सद्भावो विशेषपदार्थापृथक्सिद्धेः विशेष्यभूतपदार्थप्रकारतयैव विशेष्यवाचकपदसमानविभक्तिकत्वेनैव तत्सामानाधिकरण्येन, अर्थात् तदेकार्थबोधकत्वसमानाधिकरणविशेष्यप्रवृत्तिनिमित्तभिन्नप्रवृत्तिनिमित्तकत्वेन तदेकार्थवृत्त्या प्रतिपादनं बोधनं युक्तम्। यथा अयं गौः, शुक्लः पटः, जीवः पुण्यविशेषेण ब्राह्मणो जात इति।

विशेषः। एवं स्थावरजङ्गमात्मकस्य सर्वस्य वस्तुन ईश्वरशरीरत्वे तत्प्रकारतयैव स्वरूपसद्भाव इति तत्प्रकारीभूत ईश्वर एव तत्तच्छब्देनाभिधीयत इति तत्सामानाधिकरण्येन प्रतिपादनं युक्तम्। तदेतत्सर्वं पूर्वमेव नामरूपव्याकरणश्रुतिविवरणे प्रपञ्चितम्। अतः प्रकृतिपुरुषमहदहङ्कारः, तन्मात्रभूतेन्द्रियतदारब्धचतुर्दशभुवनात्मकब्रह्माण्डतदन्तर्वर्त्तिदेवतिर्यङ्मनुष्य-स्थावरादिसर्वप्रकारसंस्थानसंस्थितं कार्यमपि सर्वं ब्रह्मैव कारणभूतब्रह्मविज्ञानादेव सर्वं विज्ञातं भवतीत्येकविज्ञानेन सर्वविज्ञानमुपपन्नम्। तदेवं कार्यकारणभावादिमुखेन कृत्स्नस्य चिदचिद्वस्तुनः परब्रह्मप्रकारतया तदात्मकत्वमुक्तम्।

---

अयं भावः—यस्य पदार्थस्य यं पदार्थं प्रति अपृथक्सिद्धिस्तद्वाचकशब्दस्य स्वाश्रयवाचकत्वं तत्प्रयुक्तमाश्रयीभूतार्थवाचकपदसामानाधिकरण्यम्, विभिन्नप्रवृत्तिनिमित्तनिष्ठप्रकारतानिरूपितैकार्थनिष्ठविशेष्यताकबोधजनकत्वं तत्प्रयुक्तं समानविभक्तित्वम्, यस्य पदार्थस्य कञ्चित् पदार्थं प्रति पृथक्सिद्धिः कदाचित् संयोगः प्रकारतया भानं वा तद्वाचकशब्दस्य न स्वाश्रयपर्यन्तशक्तिमत्वम्; अपि तु मत्वर्थीयप्रत्ययेनाश्रयाभिधायित्वम्, इति व्यवस्था। एवं पूर्वप्रकारेण सर्वस्य वस्तुन ईश्वरशरीरतया ईश्वरप्रकारतयैव तद्वस्तुस्वरूपसद्भावः, इति तत्प्रकारीभूतस्थावरजङ्गमात्मकवस्तुप्रकार ईश्वर एव, तत्तच्छब्देन जगत् सर्वम्, इदम्, शक्ति-अंश-जल-स्थल-पर्वतादि श्रुतिगतशब्दैर्घटादिशब्दैश्चाभिधीयते। तत्सामानाधिकरण्येनेश्वरैकार्थप्रतिपादकत्वेन सर्ववस्तुवाचकतत्तच्छब्दनिष्ठेन प्रतिपादनं बोधनं युक्तम्। तदेतत्सर्वं नामश्रुतिविवरणे निरुक्तप्रकारो नामश्रुतिरनेन जीवेनात्मनानुप्रविश्येत्यस्य व्याख्याने विस्तृतम्। अतः सर्वशब्दानां स्वार्थप्रसिद्धप्रकारतया ब्रह्मवाचकत्वादेव प्रकृतिपुरुषमहदहङ्कारादिः प्रकारो विशेषणम्। संस्थानमाकृतिः, तदीयासाधारणधर्मः, तेन संस्थानेन विशिष्टं कार्यं समस्तभुवनं ब्रह्मैवेति महदादिशब्दानां यदि ब्रह्माभिधायित्वम्, तदा महदाद्यर्थोऽपि ब्रह्मपर्यन्त इति कारणभूतब्रह्मविज्ञानादेव विविधप्रपञ्चस्यापृथक्सिद्धविशेषणरूपेणोपादानभूतस्य स्वरूपतो निमित्तकारणभूतस्य ब्रह्मणो विज्ञानात् शाब्दबोधपूर्वकं स्मृत्यभ्यासेन प्रत्यक्षात्मकात्। सर्वं विज्ञातं भवति—ब्रह्मात्मकत्वेनावगतं भवति। इत्येकविज्ञाने सर्वविज्ञानमुपपन्नं मुख्यतयोपपन्नम्। तदेवम्—अनेन प्रकारेण सोम्येमाह सन्मूलाः सत्प्रतिष्ठाः सदायतना इति श्रुतिगतशब्दैः कार्यकारणभावादिमुखेन ब्रह्मणः कारणत्वेन, जगतः कार्यत्वेन, तदधिष्ठानत्वेन, अधिष्ठेयत्वेन, आधाराधेयभावेन च ब्रह्मात्मकत्वमुक्तम्।

ननु परस्य ब्रह्मणः स्वरूपेण परिणामास्पदत्वं निर्विकारत्वनिरवद्यत्वश्रुतिव्याकोपेन निवारितम्। प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादित्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं मृत्तत्कार्यदृष्टान्ताभ्यां परमपुरुषस्य जगदुपादानत्वं च प्रतिपादितम्। उपादानकारणत्वञ्च परिणामास्पदत्वमेव, कथमिदमुपपद्यते? अत्रोच्यते––सजीवस्य प्रपञ्चस्याविशेषेण कारणत्वमुक्तम्, तत्रेश्वरस्य जीवरूपपरिणामाभ्युपगमे "नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः" इति विरुध्यते, वैषम्यनैर्घृण्यपरिहारश्च जीवानामनादित्वाभ्युपगमेन तत्तत्कर्मनिमित्ततया प्रतिपादितः। वैषम्यनैर्घृण्ये न सापेक्षत्वात् न कर्माविभागादिति चेत्, नानादित्वादुपपद्यते चाप्युपलभ्यते चेति।

---

ब्रह्म स्वरूपतो जगद्रूपेण परिणमते मृद्वदिति स्वीकारे ब्रह्मणः सविकारत्वापत्त्या निर्विकारनिरवद्यश्रुतिविरोध इति न स्वरूपतः परिणामः। प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादित्येकविज्ञानेन सर्वविज्ञानं मृत्कार्येण, मृदा च दृष्टान्तेन मृदेकज्ञानेन तत्कार्याणां शरावादीनां स्वरूपतो मृदात्मकत्वावधारणेन परमपुरुषस्य पुरुषोत्तमस्योपादानत्वं परिणामास्पदत्वं कथमुपपद्यते? इति। अत्रोच्यते—यतो वा इमानि, सन्मूलाः सोम्येमाः, इदं सर्वमसृजत् यदिदञ्च किञ्च तत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य सच्च त्यच्चाभवदिति श्रुतीनामविशेषेण सजीवप्रपञ्चस्य ब्रह्मणः कारणत्वस्योपादानत्वनिमित्तकारणरूपस्य प्रतिपादकत्वमुक्तमस्ति। तत्र स्वरूपतो जीवस्य ब्रह्मपरिणामत्वाङ्गीकारे "नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः" इति सूत्रेण जीवस्योपपादितेन नित्यत्वेन विरोधः।

ईश्वरः कस्मैचिज्जीवायोत्तमं शरीरं ददाति सुखञ्च, अन्यस्मै नीचशरीरं दुःखञ्च ददाति, इति ब्रह्मण आशङ्कितस्य वैषम्यनैर्घृण्यदोषस्य परिहाराय "वैषम्यनैर्घृण्ये न सापेक्षत्वात्" इत्यारब्धेन सूत्रेण जीवानां पूर्वार्जितकर्मवैलक्षण्यादेव मनुष्यादिसुखदुःखतत्तारतम्यं स्थापितम्, तेन जीवस्यानादित्वं सिद्ध्यति। पूर्वपूर्वजीवकर्मणामुत्तरोत्तरजीववैषम्यहेतुतेति जीवस्यानादित्व एव निर्वहति। अनादिभावस्य नाशादर्शनाज्जीवस्य नित्यत्वम्। तथा "न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च" इति सूत्रेणापि जीवस्य नित्यत्वं सिद्ध्यति। तथा हि सृष्टेः प्राक् जीवस्याविभागेन ब्रह्मरूपेणावस्थितौ जीवस्यैवाभावे तत्कर्मणोऽप्यभावः सिद्ध एव, कथं वैषम्यपरिहारस्तत्राह—चेन्नानादित्वादुपपद्यत इति। जीवस्यानादित्वात् कर्मणः पूर्वसत्ता सम्भवति, अपि च जीवस्यानित्यत्वे कर्मणा सह जीवनाशे तेन कर्मफलालाभात्कृतहानप्रसङ्गः, अकृतकर्मणा जीवेन न वोत्पन्नेन फललाभादकृताभ्यागमप्रसङ्ग इति जीवनित्यत्वं सिद्धम्। तथा प्रकृतेरपि अनादिता श्रुतिभिः प्रतिपादितेति प्रकृतेरपि ब्रह्म-

अकृताभ्यागमकृतविप्रणाशप्रसङ्गश्चानित्यत्वेऽभिहितः, तथा प्रकृतेरप्यनादिता—

"अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" ॥

इति प्रकृतिपुरुषयोरजत्वं दर्शितम् । "अस्मान् मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः", "मायां तु प्रकृतिं विद्याद् मायिनञ्च महेश्वरम्" इति प्रकृतिरेव स्वरूपेण विकारास्पदम् इति दर्शयति । "गौरनाद्यन्तवती जनित्री भूतभाविनी" इति स्मृतश्च भवति,

प्रकृतिं पुरुषं चापि विद्ध्यनादी उभावपि ।
भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा[1] ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ! ययेदं धार्यते जगत् ॥
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः[2] ।
मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्[3] । इत्यादिकाः ।

---

परिणामतास्वरूपो न सम्भवति, न वा प्रकृतिपरिणामभूतस्य पृथिव्यादेः स्वस्वरूपतो ब्रह्मपरिणामता, ब्रह्मपरिणामत्वे श्रुतिविरोधः, तथा हि—

अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥

इति प्रकृतेरजत्वबोधनेनानादित्वबोधनात्, पृथिव्यादितद्विकाराणाञ्च प्रकृतिविकारत्वबोधनात् । इति प्रकृतिपुरुषयोरजत्वं दर्शितम् । "अस्मान् मायी सृजते" इति श्रुत्या, "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुत्या च प्रकृतिविशिष्टेश्वरस्य स्रष्टृत्वं जीवस्य प्रकृतिपरिणामशरीराध्यासकृतभोगवत्त्वमुक्तम् । "गौरनाद्यन्तवती सा जनित्री भूतभाविनी" इति च श्रुतिर्गौर्वाच्यायाः प्रकृतेः महदादिसमष्टिसृष्टिपरिणामित्वं भूतभाविनीत्यनेन व्यष्टिपरिणामित्वमुक्तम् । प्रकृतिं पुरुषं चेत्यादिस्मृतिभिः प्रकृतेः पुरुषस्य चानादित्वं प्रकृतेर्जगत्परिणामित्वञ्च प्रतिपादितम् ।

---

१. श्रीमद्भगवद्गीता—७।४-५; २. तत्रैव—९।८; ३. तत्रैव—९।१० ।

एवञ्च प्रकृतेरपीश्वरशरीरत्वात् प्रकृतिशब्दोऽपि तदात्मभूतेश्वरस्य पुरुषप्रकारसंस्थितस्य वाचकः, पुरुषशब्दोऽपि तदात्मभूतेश्वरस्य तत्प्रकारसंस्थितस्य वाचकः, पुरुषोऽपि तदात्मभूतेश्वरस्य पुरुषप्रकारसंस्थितस्य वाचकः।

अतस्तद्विकाराणामपि तथैवेश्वर आत्मा, तदाह—

व्यक्तं विष्णुस्तथाव्यक्तं पुरुषः काल एव च।
स एव क्षोभको ब्रह्मन् क्षोभ्यस्तु परमेश्वरः ॥

अतः प्रकृतिप्रकारसंस्थिते परमात्मनि प्रकारभूतप्रकृत्यंशे विकारः, प्रकार्यंशे चाविकारः। एवमेव जीवप्रकारसंस्थिते परमात्मनि च प्रकारभूतजीवांशे सर्वे चापुरुषार्थाः, प्रकार्यंशो नियन्ता, निरवद्यः, सर्वकल्याणगुणाकरः, सत्यसङ्कल्प एव। तथा च सति कारणावस्थ ईश्वर एवेति तदुपादानकजगत्कार्यावस्थोऽपि स एवेति कार्यकारणयोरनन्यत्वम्, सर्व-

---

"भूमिरापोऽनलो वायुः" इत्यादिना, "अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्" इत्यादिना च जीवप्रकृतेरीश्वरशरीरत्वमुक्तम्। ब्रह्मण उपादानत्वं तु प्रकृतिजीवद्वारकम्, प्रकृतेर्ब्रह्मशरीरस्य परिणामास्पदत्वरूपमुपादानत्वं जीवस्य ज्ञानसंकोचविकासरूपपरिणामास्पदत्वरूपमुपादानत्वं तद्द्वाराऽऽत्मनो ब्रह्मण उपादानत्वम्, न स्वरूपतः। प्रकृतिजीवयोरुपादानत्वस्य स्मृत्युक्तत्वेऽपि तयोः स्वशरीरकब्रह्मपरत्वेन तत्तच्छरीरकब्रह्मण एवोपादानत्वं सिद्धम्। यथा प्रकृतिशब्दस्य स्वशरीरकब्रह्मपरत्वम्, तथा प्रकृतिविकारवाचकानामपि विकारशरीरकब्रह्मात्मवाचकत्वम्, तदाह —

व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः कालएव च।
स एव क्षोभको ब्रह्मन् क्षोभ्यस्तु परमेश्वरः ॥

इत्यत्र व्यक्तादिविष्णुपदयोः सामानाधिकरण्यं तथात्व एव।

अतो ब्रह्मणः प्रकृतिपुरुषद्वारकजगदुपादानत्वादेव प्रकृतिप्रकारसंस्थिते परमात्मनि द्वारे प्रकृत्यंशे विकारः, प्रकार्यंशे चाविकारः। एवमेव जीवप्रकारसंस्थिते परमात्मनि प्रकारभूतजीवांशे सर्वेऽपुरुषार्थाः दुःखशोकरागद्वेषाविद्यादयः। प्रकार्यंशो नियन्ता, निरवद्यः, शुद्धः, शोकादिप्रतिकूलशून्यः, सर्वकल्याणगुणाकरः, सत्यसङ्कल्प एव। एतावता प्रबन्धेन भगवतः कारणत्वश्रुतिर्विशिष्टविषया निर्विकारत्वश्रुतिर्विशेष्यांशविषया। तथा सत्यसङ्कल्पश्रुतिर्निर्दोषश्रुतिरपि।

श्रुत्यविरोधश्च भवति। तदेवं नामरूपविभागानर्हसूक्ष्मदशापन्नप्रकृतिपुरुषशरीरं ब्रह्म कारणावस्थं जगतस्तदापत्तिरेव च प्रलयः। नामरूपविभक्तस्थूलचिदचिद्वस्तुशरीरकं ब्रह्म कार्यावस्थम्, ब्रह्मणस्तथाविधस्थूलभावः सृष्टिरुच्यते।

यथोक्तं भगवता पराशरेण—

"प्रधानपुंसोरजयोः कारणकार्यभूतयोः" इति।

तस्मादीश्वरप्रकारभूतसर्वावस्थप्रकृतिपुरुषवाचिनः शब्दाः तत्प्रकारविशिष्टतयाऽवस्थिते परमात्मनि मुख्यतया वर्तन्ते, जीवात्मवाचि देवमनुष्यादिशब्दवत्। यथा देवमनुष्यादिशब्दा देवमनुष्यादिप्रकृतिपरिणामविशेषाणां जीवात्मप्रकारतयैव पदार्थत्वात् प्रकारिणि जीवात्मनि मुख्यतया वर्तन्ते, तस्मात् सर्वस्य चिदचिद्वस्तुनः परमात्मशरीरतया तत्प्रकारत्वात् परमात्मनि मुख्यतया वर्तन्ते सर्वे तद्वाचकाः शब्दाः। अयमेव चात्मशरीरभावः, पृथक्सिद्ध्यनर्हाधाराधेयभावो नियन्तृ-

---

ननु चिदचिद्विशिष्टस्य परमात्मनो हि नित्यत्वात् सृष्टिप्रलययोरयोगस्तत्राह—तदेवमिति। नामरूपविभागानर्हसूक्ष्मदशापन्नप्रकृतिपुरुषशरीरं ब्रह्म कारणम्। जगतस्तदापत्तिर्नामरूपविभागानर्हतापत्तिः प्रलयः। नामरूपविभागार्हदशापन्नप्रकृतिपुरुषशरीरं ब्रह्म कार्यम्। ब्रह्मणस्तथाविधस्थूलभावः नामरूपविभागार्हप्रकृतिपुरुषशरीरकत्वापत्तिस्सृष्टिः।

प्रधानपुरुषयोरजत्वं नित्यत्वं कार्यत्वम्, ब्रह्मणः कारणत्वं च प्रमाणयति—प्रधानेति। जीवे कार्यत्वं नामरूपविभार्हत्वमेव। कारणत्वञ्च ब्रह्मणि तदनर्हचिदचिद्विशिष्टावस्थात्वमेव। अवस्थात्वञ्च भाव्यपृथक्सिद्धधर्म एव। तेन स्वरूपतो नित्यत्वेऽपि कारणावस्था न विरोधमास्कन्दति। तस्माच्चिदचिन्मुखेन ब्रह्मण्येव कारणत्वादीश्वरप्रकारभूतसर्वावस्था-निरुक्तकार्यावस्था-निरुक्तकारणावस्थाविशिष्टप्रकृतिपुरुषवाचकाः शब्दाश्चिदचिद्रूपप्रकारविशिष्टतयाऽवस्थिते परमात्मनि मुख्यतयाऽभिधावृत्त्या वर्तन्ते। देवमनुष्यादिप्रकृतिपरिणामवाचका यथा स्वात्मकप्रकारविशिष्टजीववाचकास्तेन जीवप्रकृतिपरिणामवाचकशब्देनोक्तौ कार्यकारणभावौ ब्रह्मनिष्ठावेव पर्यवस्यतः। चिदचितोर्ब्रह्मणि नित्यप्रकारत्वे एकाश्रयत्वं तदेकप्रयोजनकत्वं प्रयोजकम्, न सहोपलम्भो गन्धादिषु व्यभिचारात्। अयमेवापृथक्सिद्ध्यनर्हशरीरशरीरिभावः, आत्मशरीरभावश्च। पृथक्सिद्ध्यनर्हो नियाम्यनियामकभावः, सर्वात्मना आधारत्वादिना

नियाम्यभावः, शेषशेषिभावश्च। सर्वात्मनाधारतया नियन्तृतया शेषितया च आप्नोतीत्यात्मा, सर्वात्मनाधेयतया नियाम्यतया शेषतया चापृथक्सिद्धप्रकारभूतमित्याकारः शरीरमित्युच्यते। अयमेव हि जीवात्मनः शरीरसम्बन्धः। एवमेव परमात्मनः सर्वशरीरत्वेन सर्वशब्दवाच्यत्वम्।

तदाह श्रुतिगणः—"सर्वे वेदा यत्पदमामनन्ति, सर्वे वेदा यत्रैकं भवन्ति" इति तस्यैकस्य एकार्थवाचिनो भवन्ति। "एको देवो बहुधा सन्निविष्टः, सहैव सन्तं न विजानन्ति देवाः" इत्यादि। देवा इन्द्रियाणि—देवमनुष्यादीनामन्तर्यामितयाऽऽत्मत्वेन निविश्य सहैव सन्तं तेषामिन्द्रियाणि मनःपर्यन्तानि न विजानन्तीत्यर्थः। तथा च पौराणिकानि वचांसि—"नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती, वाच्ये हि वचसः प्रतिष्ठा, कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम्, वेदैश्च सर्वैरहमेव वेद्यः" इत्यादीनि सर्वाणि वचांसि सशरीरात्मविशिष्टमन्तर्यामिणमेवाचक्षते। "हन्ताहमिमास्तिस्रो देवताः, अनेन जीवेनात्मनानुप्रविश्य, नामरूपे व्याकरवाणि" इति हि श्रुतिः। तथा च मानवं वचः—

---

आप्नोतीत्यात्मा—इति व्युत्पत्तेः। सर्वात्मना आधेयतया नियाम्यतया शेषतया अपृथक्सिद्धत्वे सति प्रकारत्वं शरीरत्वमाकारत्वञ्चोच्यते, सर्वात्मना यावद्द्रव्यभावितया। चेष्टाश्रयत्वं लक्षणं शरीरस्य चतुष्पात्वं द्विपात्वमिवाव्याप्यत्वान्न भवितुमर्हति। लोके वेदे च यत्र यत्र शरीरशब्दप्रयोगस्तत्र सर्वत्रानुगतं लक्षणं निरुक्तं मूलोक्तमेव। इदं शरीरलक्षणं जीवापृथक्सिद्धत्वात्, जीवनियाम्यत्वात्, तत्प्रकारत्वाज्जीवशरीरेऽपि संगतम्। जीवशरीरतया प्रसिद्धानां देवमनुष्याद्याकृतीनां वाचकानां शब्दानां जीवपर्यन्ताभिधायित्वं मुख्यवृत्त्या यथा, तथा ब्रह्मणः सर्वशरीरत्वेन सर्वेषां शब्दानां मुख्यवृत्त्या स्वार्थप्रकारविशिष्टब्रह्मवाचकत्वं सर्वशब्दवाच्यत्वञ्च।

ब्रह्मणः सर्वशब्दवाच्यत्वे श्रुतिस्मृतीः प्रमाणयतीति—तदाहेति। सर्वे वेदा इति पदं पद्यते यतः, तत्पदं प्राप्तम्, सर्वेषु आत्मतया सन्निहितम्। तेन वैदिकसकलशब्दवाच्यत्वमुक्तम्—यत्रैकं भवन्तीति। अथैतदेकं वाक्यं विभागे साकाङ्क्षं चेदिति न्यायेनैकस्यार्थस्य सर्वशब्दवाच्यत्वात् सर्वे वेदा एकं वाक्यम्। एको देवो बहुधा सर्वप्रकारेषु विशेष्यतया सन्निविष्टः। "सन्निहितमपि देवाद्यन्तर्यामितयात्मत्वेन स्थितमपि समनस्कानीन्द्रियाणि न जानन्ति" इति श्रुत्या सर्वात्मत्वबोधकसर्वशब्दवाच्यत्वम्।

प्रशासितारं सर्वेषामणीयांसमणीयसाम् ।
रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम् ।।

अन्तःप्रविश्य अन्तर्यामितया सर्वेषां प्रशासितारं नियन्तारमणीयांस आत्मानः । कृत्स्नस्याचेतनस्य व्यापकतया सूक्ष्मभूतास्तेषामपि व्यापकत्वात् तेभ्योऽपि सूक्ष्मतर इत्यर्थः । रुक्माभमादित्यवर्णं स्वप्नधीगम्यं स्वप्नकल्पबुद्धिप्राप्यमित्यर्थः । विशदतमप्रत्यक्षतापन्ना बुद्ध्या नैकलभ्यमित्यर्थः ।

एनमेके वदन्त्यग्निं मरुतोऽन्ये प्रजापतिम् ।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ।।

एके वेदा इत्यर्थः, उक्तरीत्या परस्यैव ब्रह्मणः सर्वस्यैव प्रशासितृत्वेन सर्वान्तरात्मतया प्रविश्यावस्थितत्वात् । अग्न्यादयोऽपि शब्दाः शाश्वतब्रह्मशब्दवत् तस्यैव वाचका भवन्तीत्यर्थः । तथा च स्मृत्यन्तरः—

ये यजन्ति पितॄन्देवान् ब्राह्मणान् सहुताशनान् ।
सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ।। इति ।

पितृदेवब्राह्मणहुताशनादिशब्दास्तन्मुखेन तदन्तरात्मभूतस्य विष्णोरेव वाचका इत्युक्तं भवति ।

---

पुराणमपि सर्ववचसां प्रतिष्ठेति वाच्ये शब्दानां प्रतिष्ठेति तात्पर्येण सर्ववचोवाच्यत्वं प्रमाणयति—कार्याणामिति । विष्णोः सकलकार्यकारणत्वात् सकलवचसां वाच्यत्वं वेदैश्च सर्वैरिति । "हन्ताहमिमास्तिस्रो देवताः" इत्यादि वचांसि सर्वप्रकारविशिष्टात्मविशिष्टां परदेवमाचक्षते । तत्रार्थे प्रमाणं मानवं वचः–प्रशासितारमित्यादि । सर्वान्तःप्रविश्य नियन्तारमणीयसाम्, जीवानामपि व्यापकत्वात् सूक्ष्मम्, स्वप्नधीगम्यं स्वप्नाभं यज्ज्ञानं प्रत्यक्षतापन्नं विशदतयानुध्यानं तस्य गम्यं विषयभूतम्, एनमेके वदन्त्यग्निमित्यादि वचनेनाग्न्यादिशब्दानां शाश्वतब्रह्मशब्दवत् । अग्न्यादिमुखेन ब्रह्मपरत्वमेव अमुमेवार्थं स्मृत्यन्तरं संवदति—ये यजन्तीत्यादि । पित्रादीनां यष्टारो हि तदन्तर्यामि नारायणमेव पित्रादिशरीरकतया यजन्ति । तेन पित्रादिशब्दानां नारायणवाचित्वं व्यक्तीभवति ।

**अत्रेदं सर्वशास्त्रहृदयं जीवात्मानः स्वमसङ्कुचितापरिच्छिन्ननिर्मल-ज्ञानस्वरूपाः सन्तः कर्मरूपाविद्यावेष्टितास्तत्तत्कर्मानुरूपज्ञानसंकोचमापन्ना ब्रह्मादिस्तम्बपर्यन्तविविधविचित्रदेहेषु प्रविष्टास्तत्तद्देहोचितलब्धज्ञान-प्रसराः तद्देहाभिमानिनस्तदुचितकर्माणि कुर्वाणस्तदनुगुणसुखदुःखोप-भोगरूपसंसारप्रवाहं प्रतिपद्यन्ते। एतेषां मोचनं भगवत्प्रपत्तिमन्तरेण नोपपद्यत इति तदर्थं प्रथममेषां देवादिभेदरहितज्ञानैकाकारतया सर्वेषां**

---

सिद्धवाक्यानां तत्त्वमसीत्यादीनामभेदश्रुतीनां "यस्यात्मा शरीरं द्वा सुपर्णा-सयुजा सखाया" इत्यादीनां भेदश्रुतीनां चिदचिद्विशिष्टपरतया निष्कृष्टकेवला-पृथक्सिद्धविशेषणमात्रपरतयार्थयोरुपपन्नयोरपि मोक्षोपायबोधकश्रुतिभिः ब्रह्मविद् ब्रह्मैव भवतीत्यादिभिर्ब्रह्मातिरिक्तस्य मिथ्यात्वप्रतीतेः, तदनुगुणतया श्रुत्यन्तराणा-मप्यर्थः प्राप्नोत्यत आह—**अत्रेदं सर्वशास्त्रहृदयमिति**। सर्वपदेन निवर्तकश्रुतयो ब्रह्मविद् ब्रह्मैवेत्यादयो गृह्यन्ते। चतुर्विधोऽपि भेदोऽत्र मिथ्याज्ञाननिबन्धन इत्या-दिना निवर्त्यवचनानि विवक्षितानि। श्रुत्यन्तरार्थोऽपि सर्वशब्देन विवक्षितः। विभेदजनकेत्यादौ जीवाद्वैतवादोऽपि विवक्षितः। उपायपरवाक्येषु ध्यानोपासनादि विवक्षितम्। निवर्त्यवाक्येन "अविद्या कर्मसंज्ञान्या तृतीया शक्तिरुच्यते" इत्यत्रोक्ताविद्या-कृतदेवमनुष्यादिभेदनिवृत्तिर्जीवेभ्योऽभिप्रेता। भेदश्रुतिरभेदाविरोधान्नेया। भेदश्रुतेर्न निषेधार्थमनुवादः, ईश्वरे शितव्यादिभेदानां प्रमाणन्तराप्राप्तत्वेनानुवादासम्भवात्।

प्रमाणान्तराप्राप्तोऽपि भेदः फलविशेषार्थं गरुडभावनादिवदारोप्यत इति न वाच्यम्। असतो भेदस्यारोपेऽभेदश्रुतिविरोधेन चेत् क्रियते, तर्हि भेदश्रुतिविरोधेना-भेदारोपस्य विनगमनाविरहेण प्रसक्तेः। तत्र भेद एव गरुडाभेदारोपः फलविशेषार्थः। तत्तज्ज्ञानस्य मोक्षोपायत्वविरोधोऽभेदारोप इति चेत्, भेदारोपेऽपि समानो विरोधः। आरोपितस्य भेदस्य शास्त्रेण निषेधे तस्य प्रयोजनपर्यवसायित्वविरोधः प्रयोजनस्याभि-चारान्न तत्त्वमिति न अर्थिभेदेन प्रयोजनवत्त्वस्य तद्बोधितस्याभिचारेऽपि सत्त्वात् प्रयोजनपर्यवसायित्वस्यावश्यकत्वेऽप्राप्यभेदविज्ञापनतन्निषेधपरत्वे भेदस्तन्निषेधश्रुत्यो-र्नोपपद्यते। तस्मात् कृत्स्नश्रुतिपर्यालोचनीयत्वे मदुक्त एव तदर्थ उचित इत्याशयेनाह—सर्वशास्त्रहृदयमिति। जीवात्मानो ज्ञानवन्तः तज्ज्ञानं स्वाभाविकं नित्यं स्वभावतोऽ-सङ्कुचितं विभु न चासङ्कुचितं कृत्स्नप्रभावत् परिच्छिन्नदेशवृत्तिरपरिच्छिन्नं सर्वविषयकम्। निर्मलं रागद्वेष्यताशून्यं सर्वनिष्ठभगवदात्मकत्वविषयकत्वेन रागता-द्यसम्भवात् तथाभूताः सन्तः कर्मरूपाविद्यावेष्टिताः "अविद्याकर्मसंज्ञान्या तृतीया शक्तिरुच्यते" इत्युक्तलक्षणेन पापपुण्यरूपकर्मवन्तः। तत्तारतम्येनाल्पाधिकाभ्यां ज्ञानसङ्कोचमापन्ना अप्राणिभ्यः प्राणिनामधिकाः ज्ञानादयः प्राणिष्वपि पश्वादिभ्यो

साम्यं प्रतिपाद्य तस्यापि स्वरूपस्य भगवच्छेषतयैकस्वरूपैकरसतया भगवदात्मकतामपि प्रतिपाद्य भगवत्स्वरूपञ्च हेयप्रत्यनीककल्याणैकतानतया सकलेतरसजातीयमनवधिकातिशयासंख्येयकल्याणगुणालयं स्वसङ्कल्पप्रवृत्तसमस्तचिदचिद्वस्तुजाततया सर्वस्यात्मभूतं प्रतिपाद्य तदुपासनं साङ्गं तत्प्रापकं प्रतिपादयन्ति शास्त्राणि इति ।

यथोक्तम्—

निर्वाणमय एवायमात्माज्ञानमयो मलः ।
दुःखाज्ञानमला धर्माः प्रकृतेस्तेन चात्मनः ॥

प्रकृतिसंसर्गकृतकर्ममूलत्वान्नात्मस्वरूपप्रयुक्ता धर्मा इत्यर्थः । प्राप्ताप्राप्तविवेकेन प्रकृतेरेव धर्मा इत्युक्तम् ।

---

मानवानाम् । तत्रापि अल्पाधिकभावः । कर्माधीनं ज्ञानतारतम्यं न स्वेन साक्षात्; अपि तु देहविशेषद्वारकम् । ब्रह्मादिस्तम्बपर्यन्तदेहा विविधा देवादिभेदैर्विचित्राः । ह्रस्वदीर्घसन्निवेशकृता आत्मनां देहप्रवेशोऽणुतया उत्क्रान्त्यागतिभ्यां श्रुतिसिद्धाभ्यां यथादेहं ज्ञानप्रसरस्तेषाम्, तत्तद्देहेषु स्वरूपाभिमानिनः । यथादेहाभिमानं कर्माणि कुर्वाणः, यथाकर्म सुखदुःखभाजः । आत्माभिमानविषयानुकूलं सुखम् । आत्माभिमानविषयप्रतिकूलं दुःखम् । तद्रूपसंसारप्रवाहं ते जीवाः प्रतिपद्यन्ते, उत्तरोत्तराविद्याकर्मकलेवराणां पूर्वपूर्वाविद्यादीनां हेतुत्वात्, बीजाङ्कुरन्यायेन नानवस्थादोषावकाशः ।

अथोपायस्वरूपमाह—एतेषां मुक्तिसंसारमोक्षो भगवत्प्रपत्तिमन्तरेण न सम्भवति, भक्तावपि प्रपत्तिरङ्गम् । प्रपत्तिस्वतन्त्रमुपायः, उपायसम्पत्तये शास्त्राणि प्रथमं जीवानां देवादिभेदरहितज्ञानैकाकारतां ततस्तेषां भगवच्छेषतैकरसतया भगवदात्मकतां ततो हेयप्रत्यनीकत्वादिभिर्भगवदसाधारणधर्मैस्सकलेतरविसजातीयं भगवत्स्वरूपं प्रतिपाद्य तदुपासनं वेदनध्यानादिशब्दैः साङ्गं तत्प्रापकं भगवत्प्रापकं प्रतिपादयन्ति ।

उक्तार्थेषु क्रमेण प्रमाणमुपन्यस्यन् प्रथमं जीवस्य ज्ञानैकाकारतायां प्रमाणमाह—यथोक्तमिति । निर्वाणमय आनन्दमयो ज्ञानमयो ज्ञानवान् अमलो रागद्वेषशून्यो दुःखादयः प्रकृतेर्दुःखादिप्रकृतितादात्म्याभिमानिनो जीवस्य प्रकृतेरित्युक्तेर्दुःखादेः प्रकृतिसंसर्गकृतदेहाभिमानकृतकर्ममूलकत्वात् प्रकृतिसंसर्गसत्त्वे दुःखादिसत्ता तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्यां प्राप्ताप्राप्तविवेकन्यायेन प्रकृतेस्त उच्यन्ते । जीवस्य

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ।।

इति देवतिर्यङ्मनुष्यस्थावररूपप्रकृतिसंश्लिष्टस्यात्मनः स्वरूपविवेचनी बुद्धिर्येषां ते पण्डिताः । तत्प्रकृतिविशेषवियुक्तात्मयाथात्म्यज्ञानवन्तास्तत्र तत्रात्यन्तविषयाकारे वर्तमानमात्मानं समानाकारं पश्यन्तीति समदर्शिन इत्युक्तम्, तदिदमाह—

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः[1] ।। इति ।

निर्दोषं देवादिप्रकृतिविशेषसंसर्गरूपदोषरहितं स्वरूपेणावस्थितम् । सर्वमात्मवस्तुनिर्वाणरूपज्ञानैकाकारतया सममित्यर्थः । तस्यैवम्भूतस्यात्मनो भगवच्छेषतैकरसता तन्नियाम्यता तदेकाधारता च तच्छरीरतत्तनुप्रभृतिभिस्तत्समानाधिकरणेन च श्रुतिस्मृतिपुराणेषु प्रतिपाद्यत इति पूर्वमेवोक्तम् ।

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते[2] ।। इति ।

---

देवादिस्वरूपमौपाधिकम्, तद्वियुक्तस्य ज्ञानरूपतया साम्ये प्रमाणम्—विद्याविनयेति । ब्राह्मणे श्वपाकादिविषयाकारेष्वपि ज्ञानैकाकारतया ये जीवान् पश्यन्ति, ते समदर्शिनः । इत्थं पश्यतः फलप्राप्तिरुच्यते । "इहैव तैर्जितः सर्गः" इत्यादिना ज्ञानरूपतया साम्यं जीवस्य यथार्थस्वरूपं नौपाधिकमिति । निर्दोषं हि सममित्यादिनोच्यते दोषो नाभक्ष्यभक्षणादिरूपोऽपि तु देवादिप्रकृतिविकारसंसर्गरूपास्तच्छून्यं रूपं समम्, तस्माज्ज्ञानतया समत्वात् तत्र स्थितास्तद्दृष्टयस्ते ज्ञानिनो ब्रह्मणि स्थिरदृष्टिमन्तः, आत्मवस्तुनिर्वाणज्ञानत्वेन सममित्यर्थः । तस्य निर्वाणरूपज्ञानैकाकारस्य भगवच्छेषतैकरसता भगवदर्थता भगवन्नियाम्यता भगवदेकाधारता भगवत्तनुशरीरशक्तिप्रभृतिभिः शब्दैर्भगवदर्थबोधकसमानविभक्तिकत्वेन प्रतिपाद्यन्ते ।

---

१. श्रीमद्भगवद्गीता—५।१९ ; २. तत्रैव—७।१४ ।

तस्यैतस्यात्मनः कर्मकृतविचित्रगुणमयप्रकृतिसंसर्गरूपात् संसारान्मोक्षो भगवत्प्रपत्तिमन्तरेण नोपपद्यत इत्युक्तं भवति। "नान्यः पन्था अयनाय विद्यते" इत्यादि श्रुतिभिश्च।

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः॥
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्[1]।

इति सर्वशक्तियोगात् स्वैश्वर्यवैचित्र्यमुक्तम्।

"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इत्यनन्तविचित्रमहाश्चर्यरूपं जगन्मयाऽयुतायुतांशांशेनात्मतया प्रविश्य सर्वं मत्सङ्कल्पेन विष्टभ्यानेन रूपेणानन्तमहाविभूतिरपरिमितोदारगुणसागरो निरतिशयाश्चर्यभूतः स्थितोऽहमित्यर्थः।

---

यथा स्वार्थं स्वाधीनं स्वापृथक्सिद्धं वस्तु स्वशरीरादिबोधकपदैः स्वार्थाभिन्नार्थबोधकत्वेन मनुष्यादिशब्दैश्च स्वार्थं उच्यते, तथा तस्यैतस्य स्वतःशुद्धस्य प्रकृतिसंसर्गेण मलिनस्य कर्मकृतविचित्रप्रकृतिसंसर्गाद् मोक्षो न भगवत्प्रपत्तिमन्तरेणेति "नान्यः पन्था अयनाय विद्यते" इति ग्रन्थेन प्रतिपाद्यते। तमेवं विद्वानित्यत्र वेदनमुपासनं विधीयते, उपासनस्य स्वनिष्पत्त्यर्थं प्रपत्तिसापेक्षत्वमिति प्रपत्तेरनन्योपायता अतिरिक्ता।

जगतो भगवदेकनियाम्यत्वे तदेकधार्यत्वे प्रमाणं दर्शयति—न च मत्स्थानि भूतानीति। भूतानां भगवन्निष्ठत्वाभावे भगवदात्मकत्वं कथमिति शङ्कामपाचिकीर्षुराह—मया ततमिति। परोक्षरूपेण मया जगत् ततमिति व्याप्तम्। धारकेण मया व्याप्यमित्यर्थ इति स्फुटीकरोति मत्स्थानीत्यनेन। "न चाहं तेष्ववस्थितः" इत्यनेन भगवतो जगदायत्तस्थितत्वं व्यावर्तितम्। एवं जगतः स्वाधीनस्थितिकत्वविधानां "न च मत्स्थानि भूतानि" इत्यनेन भगवदात्मकत्वनिषेधः तात्पर्यविषयः। लोकप्रसिद्धक्लेशकृतधार्यधारकभावादिलक्षणो धार्यधारकभावो न, सङ्कल्पमात्रेणावधार्यत इत्यर्थः। तदाह—पश्य मे योगमैश्वरमिति। सर्वशक्तियोगादैश्वर्ये वैचित्र्यम्। सङ्कल्पैकदेशेन धारकत्वे प्रमाणमाह—विष्टभ्येति। तेनेदमुक्तं भवति—अनन्तविचित्रमहाश्चर्यरूपं जगद् ममायुतायुतांशांशेनात्मतया मदीयांशांशरूपेण मदाकारेण प्रविश्य स्वसङ्कल्पे-

---

१. श्रीमद्भगवद्गीता–९।४-५।

तदिदमाह—

एकत्वे सति नानात्वं नानात्वे सति चैकता ।
अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हति ।। इति ।

प्रशासितृत्वेनैक एव सन् विचित्रचिदचिद्वस्त्वन्तरात्मतया प्रविश्य विष्टभ्य नानात्वेनावस्थितोऽपि सन् अनवधिकातिशयासंख्येयकल्याणगुणगणः सर्वेश्वरेश्वरः परब्रह्मभूतः पुरुषोत्तमो नारायणो निरतिशयाश्चर्यभूतो नीलतोयदसङ्काशः पुण्डरीकदलामलायतेक्षणः सहस्रांशुः सहस्रकिरणः परमे व्योम्नि यो वेद निहितं गुहायाम्, परमे व्योमन्, तदक्षरे परमे व्योमन्, इत्यादि श्रुतिसिद्ध एक एवावतिष्ठते । ब्रह्मव्यतिरिक्तस्य कस्यचिदपि वस्तुन एकस्वभावस्यैककार्यशक्तियुक्तस्यैकरूपस्य रूपान्तरयोगः, स्वभावान्तरयोगः, शक्त्यन्तरयोगश्च न घटते । तस्यैतस्य परब्रह्मणः

---

नावष्टभ्य आलम्ब्यानेन रूपेण विलक्षण आविष्कृतः, निरंशत्वे सांशत्वव्यवहारः । एकत्र पूर्णतया वर्तमानोऽन्यत्र न स्यादिति शङ्काव्युदासार्थः ।

"न च मत्स्थानि भूतानि" इति जगन्मिथ्याशङ्कावहो ग्रन्थो व्याख्यात इदानीमेकत्वे सति नानात्वमिति वचनम्। भेदाभेदवादशङ्कावहं व्याख्यातुमुपक्रमते—तदिदमिति। परमात्मा प्रपञ्चाद् भिन्नत्वाद् एकः। प्रपञ्चभिन्नत्वान्नानाप्रपञ्चेन देवस्य स्वाभाविकभेदाभेदाङ्गीकारादिदं भेदाभेदव्याख्यानं न युक्तम्, घटाद्भेदाभेदयोरेकत्र पटेऽपि स्वीकारेण तयोरेकत्र प्रतोतिपराहतत्वात् । श्रीभाष्यकारः स्वयमेव व्याचष्टे—परमात्मा सकलप्रपञ्चेषु प्रशासितृत्वेनैक एव सन् विचित्रचिदचिद्वस्तुषु अन्तरात्मतया प्रविश्य विष्टभ्य अवलम्ब्य नानाशरीरकतया नाना कर्म कारयन् नानारूपतां भजते। एवं स्वल्पांशांशेन निरंशेन पूर्णतयाऽनेकेषु चिदचिद्विचित्रभेदेषु वर्तमानेनातोंऽशांशत्वेन भासमानेन स्वरूपेण विचित्रचिदचित्प्रपञ्चमाश्चर्यमयमन्तरात्मतया विष्टभ्य नानारूपेणावस्थितोऽपि एकोऽनवधिकातिशयासंख्येयकल्याणगुणगणः कल्याणगुणानामनवधिकत्वे निरतिशयत्व एव विभूतिद्वयनियमनधारणादिः सम्भवति। सर्वेश्वरशब्देन स्वाधीनप्रजापतिदेवादिव्यावृत्तिः। पुरुषोत्तमादिशब्दाभ्यां प्रमाणपुरुषसूक्तनारायणानुवाक्प्रतिपाद्यो नारायणः स्मर्यते। इत्थं विचित्रभेदशरीरकत्वं गतोऽपि स्वरूपतो विलक्षणः। स्वरूपतो वैलक्षण्यमुक्त्वा विग्रहतोऽपि वैलक्षण्यमाह—नीलतोयदेति। तस्य यथाकप्यासमिति श्रुतिं विग्रहवैलक्षण्ये प्रमाणत्वेन स्मारयति—पुण्डरोकदलामलायतेक्षण इति। पुण्डरीकदलपदेन पद्मपत्रोपमेक्षण इति मानं स्मरति।

सर्ववस्तुविसजातीयतया सर्वस्वभावत्वं सर्वशक्तियोगश्चेत्येकस्यैव विचित्रानन्तरूपता च पुनरप्यनन्तापरिमिताश्चर्ययोगेनैकरूपता च न विरुध्येतेति, वस्तुमात्रसाम्याद् विरोधचिन्ता न युक्तेत्यर्थः।

यथोक्तम्—

शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः॥
भवन्ति तपतां श्रेष्ठपाकस्य यथोष्णता।

एतदुक्तं भवति—सर्वेषामग्निजलादीनां भावनामेकस्मिन्नपि भावे दृष्टैव शक्तिस्तद्विसजातीयभावान्तरेऽपीति चिन्तयितुं न युक्ता। जलादावदृष्टाऽपि सा तद्विसजातीयपावके भास्वरत्वोष्णत्वादिशक्तिः यथा दृश्यते, एवमेव सर्ववस्तुविसजातीये ब्रह्मणि सर्वसाम्यं नानुमातुं युक्तमिति। अतो विचित्रानन्तशक्तियुक्तं ब्रह्मैवेत्यर्थः, तदाह—

जगदेतन्महाश्चर्यं रूपं यस्य महात्मनः।
तेनाश्चर्यवरेणाहं भवता कृष्ण संगतः॥ इति।

---

अमलपदेन पद्मत्वप्रयुक्तदोषा निरस्ताः। आयतपदेन पद्माधिकगुणव्यावृत्तिनिरासः क्रियते। परमे व्योम्नीति नित्यविभूतियोगेन देवस्य समाभ्यधिकराहित्यं व्यनक्ति। इत्थं प्रपञ्चशरीरकत्वेन नानाभूतोऽपि निरुक्तविशेषणैः श्रुतिसिद्धैर्विलक्षण एक इति भावः। ब्रह्मव्यतिरिक्तस्य न कस्यचिदेककार्यशक्तियुक्तस्यैकस्वभावस्यैकरूपस्य शक्त्यन्तरादियोगः। ब्रह्मणः सर्ववस्तुविसजातीयतया सर्वस्वभावत्वं सर्वशक्तियोगश्चैकत्वे नानारूपत्वमविरुद्धम्।

विजातीयधर्मिणो धर्मा वस्तुत्वेन समे विजातीयधर्मिणि न सम्भवन्तीत्यत्र प्रमाणमाह—शक्तयः सर्वभावानामिति। यथा पावकनिष्ठस्योष्णत्वभास्वरत्वादेर्द्रव्यत्वेन समेऽपि जले न स्थितिरपि तु येन धर्मेण साजात्यं स धर्मो द्रव्यत्वादिस्तिष्ठतु नाम, यैर्वैजात्यं ते न कदापि तिष्ठन्ति। ब्रह्मेतरभावेषु परिमिताः परस्परविरुद्धाः शक्तयो यथा परस्परमस्मिन् न तिष्ठन्ति, तथा सर्वेभ्यो विसजातीये ब्रह्मणि सर्वसाम्यं न वक्तुं युक्तम्; अपि तु यैर्यैर्धर्मैः सर्वशक्तित्वादिभिः श्रुतिसिद्धैः सत्तर्कप्रतिष्ठितैः वैजात्यं ब्रह्मणः, ते सर्वे विलक्षणाः सत्यसङ्कल्पत्वादयो धर्मा ब्रह्मणि राजन्ते, न कदाचित्परिच्छिन्नशक्तिविशिष्टप्राकृतविकारैरभेदशङ्कावकाशः, एतदाह—एतदुक्तमित्यादिना जगदेतन्महाश्चर्यमित्यन्तेन मूलेन।

तदेतन्नानाविधानन्तश्रुतिनिकरशिष्टपरिगृहीततत्तद्व्याख्यानपरिश्रमादवधारितम्, तथा हि प्रमाणान्तरापरिदृष्टापरिमितपरिणामानेकतत्त्वनियतक्रमविशिष्टौ सृष्टिप्रलयौ। ब्रह्मणोऽनेकविधाः श्रुतयो वदन्ति—निरवद्यं निरञ्जनं विज्ञानमानन्दं निर्विकारं निष्कलं निष्क्रियं शान्तं निर्गुणमित्यादिकाः। निर्गुणं ज्ञानस्वरूपं ब्रह्मेति काश्चन श्रुतयोऽभिदधति। "नेह नानास्ति किञ्चन", "मृत्योः स मृत्युमाप्नोति, य इह नानेव पश्यति", "यस्य सर्वमात्मैवाभूत्, तत् केन कं पश्येत्, तत्केन कं विजानीयात्" इत्यादिका नानात्वनिषेधवादिन्यः सन्ति काश्चन श्रुतयः।

"यः सर्वज्ञः, स सर्ववित्, यस्य ज्ञानमयं तपः, सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते, सर्वे निमेषाः यज्ञिरे विद्युतः पुरुषादधि। अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः" इति सर्वस्मिन् जगति हेयतयाऽवगतं सर्वगुणं प्रतिषिध्य निरतिशयकल्याणगुणानन्त्यं सर्वज्ञतां सर्वनामरूपव्याकरणं सर्वस्याधारताञ्च काश्चन श्रुतयो वदन्ति। "सर्वं खल्विदं ब्रह्म, तज्जलानीति, ऐतदात्म्यमिदं सर्वम्, एकः सन् बहुधा विचारः" इत्यादिकाः ब्रह्मसृष्टं जगन्नानाकारं

---

अस्माद्वेदार्थसङ्ग्रहादापातप्रतीतोऽर्थो न तात्पर्यविषयः; अपि तु गम्भीरत्वादर्थगौरवमस्तीत्याह—तदेतदिति। भेदाभेदघटकश्रुतीतिहासपुराणादिविषयमुक्तार्थजातम्। नानाविधपदेन पठ्यमानापठ्यमानश्रुतयः अनन्तपदेन अनधीयमाना इतिहासपुराणोपबृंहिताः श्रुतयः, तत्र कृतभूरिपरिश्रमादवधारितमुक्तार्थजातं श्रुतीनां वैविध्यं तासामुक्तार्थपरत्वं बोधयितुमाह—तथा हीति। तत्र प्रथमं सृष्टिप्रलयश्रुतिवैविध्यमाह—प्रत्यक्षाद्यगम्यानि अनेकतत्त्वानि महदादीनि अपरिमितपरिणामानि। प्रकृतेर्महत्तत्त्वं तस्मादहङ्कारस्तस्मात्तन्मात्रा व्यष्टिरूपा मानशून्या नियतक्रमाः। प्रकृतेर्महत्तत्त्वमित्येवंरूपाः। तादृशक्रमविशिष्टा सृष्टिः। प्रलयक्रमः पृथ्वीजले जलं तेजसि तद्वायौ स आकाशे लीन इत्यादिरूपः। इत्थं क्रमविशिष्टौ सृष्टिप्रलयौ। ब्रह्मणोऽनेकविधत्वं श्रुतयो वदन्ति। क्वचित्तेजोऽबन्नमात्रसृष्टिः। क्वचिद्भूतपञ्चकसृष्टिः। क्वचिद् महदादिसृष्टिश्चेत्थमनेकविधत्वं सकलसृष्टिप्रलयपरवाक्यपर्यालोचनया तत्क्रमोऽवधार्यत इति अर्थान्तरेष्वपि मोक्षोपायाभेदादिष्वपि तत्परसकलवाक्यपर्यालोचनमावश्यकम्। निरवद्यमित्यारभ्य निर्गुणं ज्ञानस्वरसं ब्रह्मेति यावन्निर्गुणश्रुतिः। नेह नानास्तीत्यारभ्य

प्रतिपाद्य तदैक्यञ्च प्रतिपादयन्ति काश्चन श्रुतयः। "पृथगात्मानं प्रेरितारञ्च मत्त्वा प्रजापतिरकामयत। प्रजाः सृजेयेति पतिं विश्वस्येश्वरं शाश्वतं शिवमच्युतं तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतञ्च, सर्वस्य वशी सर्वस्येशानः" इत्यादिकाः। ब्रह्मणः सर्वस्मादन्यत्वं सर्वस्येशितव्यत्वमीश्वरत्वञ्च ब्रह्मणः सर्वस्य शेषताम्, पतित्वञ्चेश्वरस्य काश्चन। "अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा, एष त आत्माऽन्तर्याम्यमृतः। यस्य पृथ्वी शरीरम्, यस्यापः शरीरम्, यस्य तेजः शरीरम्" इत्यादि। यस्याव्यक्तं शरीरम्, यस्याक्षरं शरीरम्, यस्य मृत्युः शरीरम्, यस्यात्मा शरीरम्" इति। ब्रह्मव्यतिरिक्तस्य सर्वस्य वस्तुनो ब्रह्मणश्च शरीरात्मभावं दर्शयन्ति काश्चन श्रुतयः। नानारूपाणां वाक्यानामविरोधो मुख्यार्थापरित्यागश्च यथा सम्भवति, तथैव वर्णनीयम्।

वर्णितञ्च—अविकारश्रुतयः स्वरूपपरिणामपरिहारादेव मुख्यार्थाः। निर्गुणवादाश्च प्राकृतहेयगुणनिषेधपरतया व्यवस्थिताः, नानात्वनिषेधवादाश्च एकस्य ब्रह्मणः शरीरतया प्रकारभूतं सर्वचेतनाचेतनं वस्तु इति सर्वस्यात्मतया सर्वप्रकारं ब्रह्मैवावस्थितमिति सुरक्षिताः। सर्वविलक्षणत्व-

---

कः केन विजानीयादिति यावद्भेदनिषेधिन्यः। यः सर्वज्ञः स सर्वविदित्यादिना सर्वे निमेषा यज्ञिरे विद्युतः पुरुषादधि इत्यन्तेन ब्रह्मणः कल्याणगुणानन्तत्वादि प्रतिपाद्यते। अपहतपाप्मेत्यादि श्रुतिभिर्हेयगुणा निषिध्यन्ते, सर्वं खल्विदं ब्रह्मेत्यारभ्य ऐतदात्म्यमिदमित्यन्तेन ब्रह्मण ऐक्यं प्रतिपाद्य तत्सृष्टं जगन्नानाकारं वक्ति। पृथगात्मानमिति प्रजायेयेति श्रुती भेदं ब्रुवाते। पतिं विश्वस्येत्यादिश्रुतिभिरीश्वरस्य शेषतादि विश्वस्मिन्नुच्यते। यस्यात्मा शरीरमित्यादिना सर्वस्य ब्रह्मणः शरीरात्मभावः सम्बन्ध उच्यते। इत्थं नानारूपाणां वाक्यानां विरोधो मुख्यार्थपरित्यागश्च यथा सम्भवति, तथैव श्रुत्यादयो व्याख्येयाः।

परपक्षे सगुणभेदश्रुतीनां निर्गुणश्रुत्या बाधस्वीकारेण विरोधः। 'तत्त्वमसि' इत्यत्र लक्षणाश्रयणेन मुख्यार्थबाधश्च। भेदाभेदवादेऽपि निर्विकारत्वश्रुतिविरोधस्तत्त्वमसीत्यत्र सदोषत्वनिर्दोषत्वविरोधाद् एकस्यामुख्यत्वं वर्णनीयमिति, तस्मात् पूर्वोक्तश्रुतीनां विरोधमुख्यार्थताः स्वमत एवेति निरूपयितुमारभते—वर्णितञ्चेति। विजरो

सत्यकामत्वसत्यसङ्कल्पत्वादिवाक्यं तदभ्युपगमादेव सुरक्षितम् । ज्ञानानन्दमात्रवादे च सर्वस्मादन्यस्य सर्वकल्याणगुणाश्रयस्य सर्वेश्वरस्य सर्वशेषिणः सर्वाधारस्य सर्वोत्पत्तिस्थितिप्रलयहेतुभूतस्य निरवद्यस्य निर्विकारस्य सर्वात्मभूतस्य परस्य ब्रह्मणः स्वरूपनिरूपकधर्मो मलप्रत्यनीकानन्दरूपज्ञानमेवेति सप्रकाशतया स्वरूपमपि ज्ञानमेवेति प्रतिपादनादनुपालितम्, ऐक्यवादाश्च शरीरात्मभावेन सामानाधिकरण्यमुख्यार्थतोपपादनादेव सुस्थिताः । एवञ्च सत्यभेदो भेदो वा द्रव्यात्मकता वा वेदान्तवेद्यः कोऽयमर्थः समर्थितो भवति । सर्वस्य वेदं वेद्यत्वात् सर्वं समर्थितम् । सर्वशरीरतया सर्वप्रकारं ब्रह्मैवावस्थितमित्यभेदः समर्थितः । एकमेव ब्रह्म नानाभूतचिदचिद्वस्तुप्रकारं नानात्वेनावस्थितमिति भेदाभेदौ । अचिद्वस्तुनश्चिद्वस्तुनश्चेश्वरस्य च भेदः समर्थितः ।

---

विमृत्युरित्यविकारश्रुतयो विकारनिषेधेन मुख्यार्थाः स्वरूपे । निर्गुणं ज्ञानस्वरूपमित्यादि नैर्गुण्यवादाः प्राकृतहेयगुणनिषेधपरतया मुख्यार्थाः, नानात्वनिषेधवादाश्च ब्रह्मण एकस्य सर्वशरीरकत्वादब्रह्मात्मकत्वेन नानात्वनिषेधो ब्रह्मात्मकत्वेन नानात्वं न निषिध्यते । सर्वविलक्षणत्व–सत्यकामत्व–सत्यसङ्कल्पत्वश्रुतयो दिव्यगुणवत्त्वस्वीकारेण मुख्यार्थाः । ज्ञानमात्रवाचिपदं सत्यं ज्ञानमित्यादि । धर्मवाचकस्य शब्दस्यापृथक्सिद्धविशेषणवाचकपदानां विशेष्यपर्यन्ताभिधायित्वमिति प्रतीतेर्ब्रह्मणः स्वरूपस्य स्वप्रकाशत्वेन ज्ञानरूपत्वाच्च मुख्यार्थं सर्वेश्वरत्वादि विशेषणैरनेकैर्विशिष्टस्य परमात्मनः स्वरूपनिरूपकधर्मो ज्ञानमित्युक्त्या परपक्षे सत्यं ज्ञानमिति श्रुतौ सत्यज्ञानादिपदानां स्वेतरव्यावृत्तिपरःवव्याख्यानस्यायुक्तत्वं सूचयति—तथाहेति । ज्ञानाश्रयत्वाभावो लोकेऽदर्शनाद्यद्युच्यते, ज्ञानस्य लोके कस्यचिद्धर्मत्वेन दृष्टः, तदा ब्रह्मणो ज्ञानरूपत्वेन कस्यचिद्धर्मत्वं प्रसजेत् । श्रुतिविरोधान्नेति यद्युच्यते, तदा श्रुतिप्रमाणेन ज्ञानस्य ज्ञानवत्त्वमपि स्वीकुरु । अपि च भेदस्यानियोगितावच्छेदकत्वस्वीकारेण ज्ञानेतरभेदस्य ज्ञानत्वरूपतया प्रकारान्तरेण ज्ञानत्वं धर्म एवोक्तस्स्यात् । वस्तुतो यत्र ज्ञानत्वम्, तत्र ज्ञानाश्रयत्वाभावः, नायं नियमोऽपि तु यत्र धर्मभूतज्ञानत्वम्, तत्र ज्ञानाश्रयत्वाभाव इति न व्याप्तिविरोधः, ब्रह्मणो ज्ञानं धर्मभूतमेव न; अपि तु स्वरूपमपि ज्ञानरूपम् इति तस्य ज्ञानाश्रयत्वं युक्तिश्रुतिभ्यां सिद्धमिति सर्वे तत्र विलक्षणाः, सर्वेश्वरत्वादयो धर्माः सिद्धाः, सर्वं खल्विदमित्याद्यैक्यवादाः शरीरात्मभावेन सामानाधिकरण्यमुख्यार्थतोपपत्त्या मुख्यार्थाः ।

ननु च "तत्त्वमसि श्वेतकेतो तस्य तावदेव चिरम्" इति ऐक्यज्ञानमेव परमपुरुषार्थलक्षणं मोक्षसाधनमुच्यते, नैतदेवम्, "पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनाऽमृतत्वमेति" इति "आत्मानं प्रेरितारं चान्तर्यामिणं पृथङ् मत्वा ततः पृथक्त्वज्ञानाद्धेतोस्तेन परमात्मना जुष्टोऽमृतत्वमेति" इति साक्षादमृतत्वप्राप्तिसाधनमात्मना नियन्तुश्च पृथग्भावज्ञानमेवेत्यवगम्यते। ऐक्यवाक्यविरोधे तदपरमार्थं सगुणब्रह्म-प्राप्तिविषयमित्यभ्युपगन्तव्य इति चेत्, पृथक्त्वज्ञानस्यैव साक्षादमृतत्व-प्राप्तौ साधनत्वश्रवणादिति विपरीतं कस्मान्न भवति।

एतदुक्तं भवति—द्वयोस्तुल्ययोर्विरोधे सत्यविरोधेन तयोर्विषयो विवेचनीय इति कथमविरोध इति चेत्, अन्तर्यामिरूपेणावस्थितस्य परस्य ब्रह्मणः शरीरतया प्रकारत्वाज्जीवात्मनस्तत्प्रकारं ब्रह्मैव त्वमिति शब्देनाभिधीयते, तथैवं ज्ञातव्यमिति तस्य वाक्यस्य विषयः। एवम्भूता-ज्जीवात्तदात्मतयावस्थितस्य परमात्मनो निखिलदोषरहिततया सत्य-सङ्कल्पत्वाद्यनवधिकातिशयासंख्येयकल्याणगुणाकरत्वेन च यः पृथग्भावः,

---

अभेदस्य, भेदस्य, भेदाभेदस्य च वेदवेद्यत्वान्मदुक्तव्याख्यानप्रकारेण सर्वेषां समर्थनं सर्वस्य चिदचिदात्मकप्रपञ्चस्य ब्रह्मशरीरतया सर्वप्रकारमेकं ब्रह्मतत्त्वमित्यभेदः सिद्धः। एकमेव ब्रह्म चिदचित्प्रकारकं नानात्वेनावस्थितमिति भेदाभेदौ, ब्रह्मणा चिद-चितोर्भेद इति भेदः समर्थितः।

तत्त्वमस्यादिवाक्यावगतैक्यज्ञानमोक्षोपायत्वं परमार्थविषयमिति न वाच्यम्, "पृथगात्मनं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" इति श्रुत्या जीवेषु भिन्नत्व-ज्ञानपूर्वकतदीयप्रीतिविषयत्वस्य मोक्षसाधनत्वबोधनात्। न चैक्यज्ञानमोक्षोपाय-श्रुतिविरोधेन पृथक्त्वज्ञानस्य मोक्षोपायत्वं सगुणब्रह्मविषयमपरमार्थमिति वाच्यम्, पृथक्त्वज्ञानस्य साक्षान्मोक्षोपायत्वश्रवणेनैतस्यैव परमार्थत्वात्।

ऐक्यज्ञानभेदज्ञानयोरन्यतरस्यापरस्य परमार्थविषयत्व ऐक्यज्ञानपरमार्थविषयत्वं कुतो नेति सन्देहे वदति—ऐक्यज्ञानस्यापरमार्थविषयत्वन्नास्मन्मते; किन्तु यस्य मतेऽन्यतरस्य परमार्थविषयत्वं तस्य मतेऽन्यतरस्यापरमार्थविषयत्वं प्रसज्येदिति तन्मतेऽ-निष्टप्रसङ्ग इत्यभिप्रायेणाह—एतदुक्तमिति। तुल्ययोर्विरोधे तुल्यप्रमाणयोरर्थयो-र्विरोध एकस्य बाधेऽन्यस्यापि बाधप्रसङ्गः। स्वस्मात्तयोर्यथा विरोधः, तथा विवेचनीयः। अविरोधप्रकारश्चेत्थम्—तत्त्वमसीत्यत्र त्वम्पदेन जीवशरीरकं ब्रह्मोच्यते। ममात्मा-

सोऽनुसन्धेय इत्यस्य वाक्यस्य विषयः, इत्ययमेवार्थः पूर्वमेवासकृदुक्तः। भोक्ता भोग्यं प्रेरिताञ्च मत्वेति भोग्यरूपस्य वस्तुनोऽचेतनत्वम्, परमार्थत्वम्, सततं विकारास्पदत्वमित्यादयः स्वभावाः।

भोक्तुर्जीवस्यामलापरिच्छिन्नज्ञानानन्दस्वभावस्यैवानादिकर्मरूपाविद्याकृतनानाविधज्ञानसङ्कोचविकासौ भोग्यभूताचिद्वस्तुसंसर्गः परमात्मोपासनान्मोक्षश्चेत्यादयः स्वभावाः। एवम्भूतभोक्तृभोग्ययोरन्तर्यामितयाऽवस्थानं स्वरूपेण चापरिमितगुणौघाश्रयत्वेनावस्थानमिति परस्य ब्रह्मणो विविधावस्थानं ज्ञातव्यमित्यर्थः। तत्त्वमसीति सद्विद्यायामुपास्यं ब्रह्म सगुणम्, सगुणब्रह्मप्राप्तिश्च फलमित्यभियुक्तैः पूर्वाचार्यैर्व्याख्यातम्। यथोक्तं वाक्यकारेण—युक्तं तद्‌गुणकोपासनादिति। व्याख्यातञ्च द्रविणाचार्येण विद्याविकल्पं वदता—"यद्यपि सच्चित्तो न निर्भुग्नदैवतं गुणगणं मनसानुधावेत्, तथाप्यन्तर्गुणामेव देवतां भजते" इति। तत्र सगुणैव देवता प्राप्यत इति सच्चित्तः सद्विद्यानिष्ठः, न निर्भुग्नदैवतं गुणगणं मनसानुधावेत्। अपहतपाप्मत्वादिकल्याणगुणगणं यद्यपि दहरविद्यानिष्ठ इव सच्चित्तो न स्मरेत्, तथाप्यन्तर्गुणामेव देवतां भजते, देवता-

---

न्तर्यामी नारायण इत्थं ज्ञातव्यमिति तस्य तत्त्वमसीति वाक्यस्य विषयो विधेयः। तस्माज्जीवात्तदन्तरात्मतयावस्थितस्य परमात्मनः कल्याणगुणाकरत्वेन निखिलदोषरहितत्वादिना यो हि पृथग्भावः, सोऽनुसन्धेयो ध्यातव्य इति। पृथगात्मानं प्रेरितारञ्च मत्वेति श्रुतेर्विषयो विधेय इत्यैककण्ठ्यान्न विरोधकृतबाधप्रसङ्गः। भोक्ता भोग्यं प्रेरितारञ्च मत्वेत्यत्र भोग्यरूपस्याचेतनत्वादयः स्वाभावाः, भोक्तुर्जीवस्यामलपरिच्छेदरहितज्ञानानन्दस्वभावस्य नित्यविभुनिर्दोषज्ञानगुणकस्य ज्ञानस्वरूपस्य च कर्माविद्याकृतधर्मभूतज्ञानसंकोचविकासौ भोग्याचिद्वस्तुसंसर्गश्च परदेवोपासनान्मोक्षश्चेत्यादयः स्वभावाः, परमात्मनश्च तथाभूतस्वभावयोरन्तर्यामित्वेन स्वरूपेण ज्ञानत्वादिनापरिमितगुणाश्रयत्वेनेति विविधावस्थानं ज्ञातव्यम्। तत्त्वमसीति सद्विद्यायां सगुणस्यैवोपास्यत्वं प्राप्यत्वञ्च प्रोक्तं पूर्वाचार्यैः द्रविणाचार्यैर्बोधायनादिभिः। वाक्यकारवचनं श्रीबोधायनवचनं युक्तं तद्‌गुणकोपासनाद् निखिलहेयप्रत्यनीकत्वकल्याणगुणाकरत्वादिगुणविशिष्टस्य देवस्योपासनेत्यर्थः। तथा व्याख्यातं द्रविणस्वामिभिः, द्रविणाचार्यग्रन्थमुद्धरति—यद्यपीत्यादि। द्रविणभाष्येण दैवतात्पृथक्तयापहतपाप्मत्वादयो नोपास्याः; अपि तु स्वरूपानुबन्धिकल्याणगुणगणविशिष्टं दैवतमुपास्यम्। सद्विद्यानिष्ठेन परदेवतासाधारण-

स्वरूपानुसन्धित्वात् । सकलकल्याणगुणगणस्य केनचित् परदेवताऽसाधारणेन निखिलजगत्कारणत्वादिना गुणेनोपास्यमानापि देवता वस्तुतः स्वरूपानुबन्धि सर्वकल्याणगुणविशिष्टैवोपास्यते, अतः सगुणमेव ब्रह्म तत्रापि प्राप्यमिति सद्विद्यादहरविद्ययोर्विकल्प इत्यर्थः ।

ननु च सर्वस्य जन्तोः परमात्मान्तर्यामी तन्नियाम्यश्च सर्वमेवेत्युक्तम् । एवञ्च सति विधिनिषेधशास्त्राणामधिकारी न दृश्यते । यः स्वबुद्ध्यैव प्रवृत्तिनिवृत्तिशक्तः, स एवं कुर्यान्न कुर्यादिति विधिनिषेधयोग्यः । न चैष दृश्यते । सर्वस्मिन् प्रवृत्तिजाते सर्वस्य प्रेरकः परमात्मा कारयितेति सर्वनियमनं प्रतिपादितम् । श्रूयते च एष एव साधु कर्म कारयति, यमेभ्यो लोकेभ्य उन्निनीषति । एष एवासाधु कर्म कारयति, तं यमधो निनीषति इति साध्वसाधुकर्मकारयितृत्वात्, नैर्घृण्याच्च ।

अत्रोच्यते—सर्वेषामेव चेतनानां चिच्छक्तियोगः, प्रवृत्तिशक्तियोग इत्यादि सर्वप्रवृत्तिनिवृत्तिपरिकरं सामान्येन संविधाय तन्निर्वहणाय तदाधारो भूत्वान्तःप्रविश्यानुमन्त्रितया च नियमनं कुर्वन् शेषित्वेनावस्थितः परमात्मा एतदाहितशक्तिस्सन् प्रवृत्तिनिवृत्त्यादि स्वयमेव

---

जगत्कारणत्वेनोपास्यमानापि देवतास्वरूपनिरूपकधर्मो हि देवनिष्ठो देवादपृथग्भावेनैव ध्येयो न दहरविद्यानिष्ठवत् पृथक्तया स्वरूपनिरूपकान् धर्मानुपासीतेति वाक्यार्थोऽवगम्यते, तेन सद्विद्यायाः सगुणविषयकत्वमेवावगम्यते । दहरविद्यायां य आत्मनानुविद्येत्यादिना स्वरूपज्ञानोत्तरमिति स्वरूपात् पृथक्तया कल्याणगुणोपासना विहिता । तथा सद्विद्यायां यद्यपि न विहिता, तथापि केनचिदसाधारणेन धर्मेणोपास्यत्वस्य विहितत्वे सामान्यानन्तत्वस्य कल्याणगुणालयत्वस्योपासनं प्राप्तमेव ।

ननु सर्वस्य देवनियाम्यत्वे स एव तं साधु कर्म कारयति, यं लोकेभ्य उन्निनीषति । स एवासाधु कर्म कारयति, यमधो निनीषतीति भगवानेव प्रेरयिता कारयिता चेति जीवस्य स्वबुद्ध्यैव प्रवृत्तिनिवृत्तिशक्तत्वाभावात् । विधिनिषेधयोग्यत्वाभावेन विधिनिषेधशास्त्राधिकारोच्छेदः स्यात् । अथ च साध्वसाधुकर्मणा सुखदुःखप्रयोजकत्वेन निर्दयत्वापत्तिरत आह—उच्यत इति । चेतनानां चिच्छक्तियोग प्रवृत्तिशक्तियोगम्, प्रवृत्तिनिवृत्तिपरिकरं संविधायेति नित्यस्वकीयेच्छाधीननिरुक्तशक्तियोगशाली चेतनगणस्तन्निर्वहणसमर्थो भगवदाधारः प्राप्तभगवत्प्रवेशः तदनुमन्तृकः

**कुरुते। एवं कुर्वाणमीक्षमाणः परमात्मोदासीन आस्ते, अतः सर्वमुपपन्नम्। साध्वसाधुकर्मकारयितृत्वं तु व्यवस्थितविषयं न सर्वसाधारणम्। यस्तु पूर्वं स्वयमेवातिमात्रमानुकूल्ये प्रवृत्तः, तं प्रति प्रीतः स्वयमेव भगवान् कल्याणबुद्धियोगदानं कुर्वन् कल्याणे प्रवर्तयति। यः पुनरतिमात्रं प्रातिकूल्ये प्रवृत्तस्तस्य क्रूरां बुद्धिं ददत् स्वयमेव क्रूरेष्वेव कर्मसु प्रेरयति भगवान्। यथोक्तं भगवता—**

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥**
**तेषामेवानुकम्पार्थमहमज्ञानजं तमः।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता[1]॥**
**तानहं द्विषतः क्रूरान् संसारेषु नराधमान्।**
**क्षिपाम्यजस्रमशुभान आसुरीष्वेव योनिषु[2]॥**

**सोऽयं परब्रह्मभूतः पुरुषोत्तमो निरतिशयपुण्यसञ्चयक्षीणाशेषजन्मोपचितपापराशेः परमपुरुषचरणारविन्दशरणागतिजनिततदाभिमुख्यस्य सदाचार्योपदेशोपबृंहितशास्त्राधिगततत्त्वयाथात्म्यावबोधपूर्वका-**

---

प्रवृत्तिनिवृत्त्यादि स्वयमेव कुरुते। तथा कुर्वाणं जीवमीक्षमाणः पश्यन् उदासीन आस्ते परमात्मेति। जीवस्येत्थं स्वाधीनप्रवृत्तिनिवृत्तिकत्वेन विधिनिषेधाधिकारसिद्धिः। साध्वसाधुकर्मकारयितृत्वं तु नियताधिकारिविषयम्। यथा हि योऽतिमात्रमानुकूल्ये स्वाज्ञाविषये शास्त्रविधिनिषेधात्मके स्वयमेव प्रवृत्तस्तम्प्रति प्रीतः स्वयमेव भगवान् कल्याणमधिकानिष्टाननुबन्धि कर्म तद्विषयबुद्धियोगप्रदानं कुर्वन् हिते प्रवर्तयति। यः पुनरतिमात्रं प्रातिकूल्ये शास्त्रनिषिद्धे स्वयम्प्रवृत्तस्तस्य क्रूरां बुद्धिं ददत् तथा कर्मणि प्रेरयति, यथोक्तं भगवता—तेषामिति, तानहं द्विषतः क्रूरानिति वचनाभ्याम्। अयमेवार्थ उक्तो भगवता भाष्यकारेण—तेषामित्यादि आसुरीष्वेव योनिष्वित्यन्तेन ग्रन्थेन।

मोक्षोपायस्वरूपं विशदयति—**सोऽयमित्यादिना**। पशुछागन्यायेन परब्रह्मशब्दस्योपास्यतया प्रतिपादकस्य पुरुषोत्तमनारायणरूपतत्प्रकरणीयदेवविशेषपर्यवसायित्वाद् ब्रह्मोपासना ईश्वरभक्तिरनर्थान्तरम्।

---

१. श्रीमद्भगवद्गीता—१०।१०-११; २. तत्रैव—१६।१९।

हरहरुपचीयमानशमदमतपश्शौचक्षमार्जवभयाभयस्थानविवेकदयाऽहिंसा-द्यात्मगुणोपेतस्य वर्णाश्रमोचितपरमपुरुषाराधनवेषनित्यनैमित्तिक-कर्मोपसं तिनिषिद्धपरिहारनिष्ठस्य परमपुरुषचरणारविन्दयुगलन्यस्ता-त्मात्मीयस्य तद्भक्तिकारितानवरतस्तुति-स्मृति-नमस्कृति-वन्दना-कीर्तन-गुणश्रवण-वचन-ध्यानार्चन-प्रणामादियत्नप्रीतपरमकारुणिकपुरुषोत्तमप्रसाद-विध्वस्तस्वान्तध्वान्तस्यानन्यप्रयोजनानवरतनिरतिशयप्रियविशदतमप्रत्य-क्षतापन्नानुध्यानरूपभक्त्येकलभ्यः ।

तदुक्तं परमगुरुभिर्यामुनाचार्यपादैः—"उभयपदिकर्मिति स्वान्त-स्यैकान्तिकात्यन्तिकं भक्तियोगलभ्यः" इति ज्ञानयोग-कर्मयोग-संस्कृतान्तःकरणस्येत्यर्थः । तथा च श्रुतिः—

---

जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णभक्तिः प्रजायते ॥

इत्युक्ते पुण्ये निरतिशयत्वविशेषणम् । "मामेव ये प्रपद्यन्ते' इति विहिता भक्त्यङ्ग-प्रपत्तिरभिप्रेता, न हि स्वतन्त्रोपायभूता तत्त्वयाथात्म्यपदाभ्यां तमोगुणकार्यस्य धर्मि-विपर्यासस्य शरीरमेवात्मेति रूपस्य । रजोगुणकार्यस्य धर्मविपर्यासस्य—पीतः शंखः । आत्मकर्तृत्वाभाववान् इत्याकारस्य व्यावृत्तिः । शमदमौ अन्तर्बाह्येन्द्रियनिग्रहौ । तपः कृच्छ्रादिः, चान्द्रायणप्राजापत्यादिः । शौचं मानसं प्राणायामादिः, वाचिकं नियमज्ञानपूर्वकसाधुशब्दविषयकत्वं कायिकं स्नानादि क्षमा-दुःखसहनशीलता-भीरुत्वं भगवदपचारादि पापेभ्य इति भयस्थानविवेकः । तद्रक्षकत्वाध्यवसायो भगवति निर्भयस्थानविवेकः, परदयादुःखासहिष्णुत्वं परदुःखाहेतुत्वम् । नित्यकर्मसन्ध्यावन्दनादि-नैमित्तिकानि राहूपरागस्नानादीनि, भगवदाराधनरूपतावहानि । कर्मोपसंहृतिर-नुष्ठानम्, परिहारे निषिद्धस्य त्यागस्तद्भक्तिः शास्त्रजन्ययथार्थबोधं प्रति कारणम्, शुद्धभावं गतो भक्त्या प्रमाणात् । स्तुतिर्गुणकथनम् । वन्दिकृत्यं वा पत्तनं भगवदुद्यानादि-निर्माणम् । कीर्तनं नामोच्चारणम् । वचनं श्रोतृभ्यो भगवद्गुणानां प्रतिपादनम् । अत्र ध्यानार्चनादि अङ्गतयोपात्तं पूर्वमङ्गितयोपात्तं कथमिति न शङ्क्यम्, यावद्-धारणासिद्धिक्रियमाणस्यार्चनध्यानादेरङ्गत्वात् । धारणोत्तरं ध्यानम्, पूर्वं भक्तिशब्द-वाच्यम् । स्वान्तस्य ध्वान्तं पापमूले रजस्तमसी, अनुध्यानरूपा भक्त्येकेति । अत्र भक्ते-र्धारणोत्तरकालिकं प्रीतिरूपं तैलधारणावदविच्छिन्नस्मृतिसन्तानरूपं विवक्षितम् ।

निरुक्तविशेषणविशिष्टभक्ते रुपायत्वं पूर्वाचार्यसम्मतत्वात् साम्प्रदायिक-मित्याह—तदुक्तमिति । ज्ञानयोगो यावद् धारणासिद्धिशास्त्रजन्यभगवद्यथार्थस्वरूप-

विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ।। इति ।

अत्राविद्याशब्देन विद्येतरद्वर्णाश्रमाचारादि पूर्वोक्तं कर्मोच्यते । विद्याशब्देन च भक्तिरूपापन्नं ध्यानमुच्यते । यथोक्तम्—

इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय मृत्युं तर्तुमविद्यया ।।

"तमेव विद्वानमृत इह भवति", "नान्यः पन्था अयनाय विद्यते", "य एनं विदुरमृतास्ते भवन्ति, ब्रह्मविदाप्नोति परम्", "स यो ऽहं वै तत्परमं ब्रह्म वेद", "ब्रह्मविद् ब्रह्मैव भवति" इत्यादि वेदशब्देन ध्यानमेवाभिहितम्, निदिध्यासितव्य इत्यादिनैक्यार्थ्यात् । तदेव ध्यानं पुनरपि विशिनष्टि—

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैव आत्मा विवृणुते तनुं स्वाम् ।।

इति भक्तिरूपापन्नानुध्यानेनैवोपलभ्यते, न केवलं वेदनमात्रेण न मेधयेति केवलस्य निषिद्धत्वात् ।

---

ज्ञानपूर्वकमहरहरनुष्ठीयमानं ध्यानम् । कर्मयोगश्च वर्णाश्रमोचिताचारः, उभाभ्यां संस्कृतं ज्ञानोत्पत्तिविरोधिपापनिरसनेन धारणोत्तरानुध्यानाधारतां नीतमन्तःकरणं यस्य तस्य या ऐकान्तिकी अवश्योत्पन्ना आत्यन्तिकी अविनाशिनी या भक्तिस्तदीययोगलभ्य-परिकर्मणां संस्कारः । इममर्थं विद्याञ्चाविद्यामिति प्रमाणयति । अविद्यापदे अन्यत्वे नञ् अनश्वदते । अविद्याशब्दस्य कर्मपरत्वे प्रमाणम् । इयाजेत्यत्र अविद्यया कर्मणेत्यर्थव्याख्यानम्, विद्यापदेन भक्तिरूपापन्नं ध्यानमुच्यते ।

ननु वेदनस्यैवोपायत्वं श्रूयते, कथं ध्यानस्य तदिति न शङ्क्यम्, 'तमेव विद्वानमृत इह भवति' इत्यारभ्य 'ब्रह्मविद् ब्रह्मैव भवति' इत्यन्तश्रुतिभिर्वेदनपदेन ध्यानमेव विधीयते । "आत्मा वाऽरे" इत्यादिश्रुतौ सामान्यशब्देनोक्तस्यैकप्रकरणीयार्थस्य यथा विशेषार्थरूपत्वमिति न्यायेन मोक्षोपायतया विहितस्य वेदनस्य तथाविहितज्ञानविशेष-ध्यानरूपत्वात्, तदुक्तम्–निदिध्यासितव्य इत्यादिनैकार्थ्यादिति । तच्च ध्यानं प्रीतिरूपतां गतमेवोपाय इममर्थं प्रमाणयति । नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन, यमेवैष वृणुते तेन लभ्यः, प्रीतिमतो हि प्रीतिविषयेण कर्त्रा वरणीयता तदीयाभीष्ट-फलवत्वेनेच्छाविषयता भवति । अयमेवार्थो नायमात्मेत्यारभ्य निषिद्धत्वादित्यन्तेनोच्यते ।

एतदुक्तं भवति—योऽयं मुमुक्षुर्वेदान्तविहितो वेदानुरूपध्यानादि-विशिष्टः, यदा तस्य तस्मिन्नेवानुध्याने निरवधिकातिशया प्रीतिर्जायते, तदैव तेन लभ्यते परः पुरुष इति। यथोक्तं भगवता—

पुरुषः स परः पार्थ! भक्त्या लभ्यस्त्वनन्यया[1]।
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप[2]॥

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्[3]॥ इति।

तदनन्तरं मां तत एव भक्तेः विशत इत्यर्थः। भक्तिरपि निरतिशयानन्दप्रयोजनस्वेतरवैतृष्ण्यावहज्ञानविशेष एवेति। तद्युक्त एव परेणात्मनावरणीयो भवतीति तेन लभ्यत इति श्रुत्यर्थः। एवंविधपरभक्तिरूपज्ञानविशेषस्योत्पादकः पूर्वोक्ताहरहरुपचीयमानज्ञानपूर्वककर्मानुगृहीतभक्तियोग एव। यथोक्तं भगवता पराशरेण—

---

न मेधयेति निषेधेन केवलध्यानस्य द्वेषादिकृतस्य निषेधे ध्यानस्य विशेषरूपत्वं भक्तिपदाश्रवणेऽपि कथम्? इति शङ्कायामाह—वेदान्तभक्तिविहितध्यानरूपवेदनप्रवृत्तस्य मुमुक्षोरनुध्याननिरवधिकातिशया प्रीतिर्जायते। तदैव तेन मुमुक्षुणा परः पुरुषोत्तमो लभ्यते। यमेवैष वृणुते इति पदाभ्यां ध्यानस्य प्रीतिरूपतावगम्यते। प्रीतिरूपत्वे भक्तिरूपता सिद्धैवेति भावः। इममेवार्थं "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया" इति प्रभृतिगीतावचनैराविष्करोति। अत्रेदं तत्त्वं भाति—परदेवता यथार्थज्ञानपूर्वककर्मानुष्ठानेन परस्मिन् प्रीतिरूपं ध्यानमभ्यस्यमानं धारणोत्तरकालिकध्यानरूपं भवति। तदेवानन्तरं परमानन्दस्वरूपसाक्षात्काराभिनिवेशो भवति। ततो निरतिशयानन्दादिस्वरूपपरस्यानुभवाभिनिवेशो भवति। ततः प्रकृतिबन्धनिर्मुक्तजीवनिष्ठः प्रियभगवदनुभवो मोक्षो भगवल्लाभो भवति। भक्त्यैकेतिपदेन प्रियतमानन्दस्वरूपपरदेवतासाक्षात्काराभिनिवेशः। अभिजानातीत्यत्राभिज्ञानं तत्साक्षात्कार एव। "प्रकृत्यादिभ्यः" इत्यभेदे तृतीया वा। एवंविध इति यावानिति च गुणविभूतिविशिष्ट उच्यते, तत एव परमभक्तेः पश्चादनुभवाभिनिवेशादेव विशत इति। प्रकृतिबन्धनिर्मुक्तः सन् विलक्षणदेशविशेषविशिष्टतया परदेवतां परमप्रसादेन

---

१. श्रीमद्भगवद्गीता—८।२२; २. तत्रैव—११।५४; ३. तत्रैव—१८।५५।

वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ।। इति ।

निखिलजगदुद्धरणायावनितलेऽवतीर्णः परब्रह्मभूतः पुरुषोत्तमः स्वयमेव तदुक्तवान्—

स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ।
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः[1] ।।

इति यथोदितक्रमपरिणतभक्त्यैकलभ्य एव ।

भगवद्बोधायनटङ्कद्रमिडगुहदेवकपर्दिभारुचिप्रभृत्यविगीतशिष्टपरिगृहीत-पुरातनवेदवेदान्तव्याख्यानसुव्यक्तार्थश्रुतिनिकरनिर्दर्शितोऽयं पन्थाः । अनेन चार्वाकसाक्यौलूक्याक्षपादक्षपणककपिलपतञ्जलिमतानुसारिणो वेदबाह्या वेदावलम्बिकुदृष्टिभिः सह निरस्ताः । वेदावलम्बिनामपि यथावस्थितवस्तुविपर्यस्तदृशां बाह्यसाम्यं मनुनैवोक्तम्—

---

साक्षात्करोति । स्वेतरवैतृष्ण्यावह इत्यनेन भगवद्विषया भगवत्प्राप्तिनिरपेक्षा स्वरूपास्वादतृप्ता प्रत्यक्षदशापर्यवसायिनी ध्यानस्वरूपा भक्तिरुच्यते । पूर्वोक्तं यज्ज्ञानं यथार्थज्ञानं कर्म च तदनुगृहीत उपकृतः । निरन्तरमावर्त्यमानो भक्तियोगः प्रीतिरूपः, निरतिशयानन्दसाक्षात्काररूपो भवति । कर्मानुगृहीतस्य निरुक्तभक्तिरूपस्य ध्यानस्यैव मोक्षोपायत्वे प्रमाणम्—**वर्णाश्रमाचारवतेति** । जगदुद्धारोद्देशेनावतीर्णस्य परस्य भगवतः "स्वकर्मनिरतः" इत्याद्युक्तिः कर्मानुगृहीतस्य तस्य निरुक्तोपायत्वे परमं प्रमाणमिति । यथोक्तक्रमा यथार्थज्ञानं कर्मानुष्ठानमित्यादिकक्रमास्तैः परिणता परिपाकं नीता या भक्तिस्तया लभ्य एवेति ।

उपेयस्वरूपनिष्कर्षे शिष्टपरिगृहीतव्याख्यानमूलत्वमुक्तम्, इदानीं तदविशदीकरिष्यन् प्रथममुपायस्वरूपे शिष्टपरिगृहीतमूलत्वमाचष्टे—**भगवद्बोधायनेति** । अविगीतत्वं बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्ववत्कर्मकर्तृत्वम्, तच्च शिष्टे विशेषणं शिष्टः फलसाधनवत्त्वभ्रमशून्यः । तत्परिगृहीतत्वमर्थविशेषणं निकरपदेनाधीयमानाः पुराणाद्युपबृंहिताः खिलश्रुतयः पुराणादिनानुमिता अनुपलब्धाः श्रुतयः, तासां निकरः । तेन बाह्याश्चार्वाकादयः कुदृष्टयो मिथ्यावादिनश्च तेषामुपायोपेय-

---

१. श्रीमद्भगवद्गीता—१८।४५-४६ ।

या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ताः निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ।। इति ।

रजस्तमोभ्यामस्पृष्टमुत्तमं सत्त्वमेव येषां स्वाभाविको गुणः, तेषामेव वैदिकी रुचिः, वेदार्थयाथात्म्यावबोधश्चेत्यर्थः । यथोक्तं मात्स्ये—"संकीर्णाः सात्त्विकाश्चैव राजसाः तामसास्तथा" इति । केचिद् ब्रह्मकल्पाः संकीर्णाः, केचित् सत्त्वप्रायाः, केचिद् रजःप्रायाः, केचित् तमःप्राया इति कल्पविभागमुक्त्वा सत्त्वरजस्तमोमयानां तत्त्वानां माहात्म्यवर्णनञ्च तत्तत्कल्पोक्तपुराणेषु सत्त्वादिगुणमयेन ब्रह्मणा क्रियत इति चोक्तम्—

यस्मिन् कल्पे तु यत्रोक्तं पुराणं ब्रह्मणा पुरा ।
तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते ।। इति ।

विशेषतश्चोक्तम्—

अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते ।
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ।।
सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः ।
तेष्वेव योगसंसिद्धाः गमिष्यन्ति परां गतिम् ।।
संकीर्णेषु सरस्वत्याः पितॄणाम्............। इत्यादि ।

---

वर्णनमसङ्गतमिति सिद्धम् । औलूक्यः कणादस्तदादीनां बाह्यत्वं वेदविरुद्धार्थप्रतिपादकत्वेन, मिथ्यावादिनां वेदप्रामाण्यमन्तृत्वेऽपि कुदृष्टित्वं वस्तुप्रकारभ्रमवत्त्वेन, कुदृष्टीनां वेदबाह्यत्वं मनुना "या वेदबाह्याः" इत्यादिना प्रोक्तम् । यद्यपि वेदरूपि सत्त्वकार्यं केवलं शुद्धत्वाभावेन रजःस्पर्शान्न यथार्थबोधप्रयोजकम्, केवलं सत्त्वप्रयोज्यो यथार्थबोधः । मात्स्यपुराणवचनेन "सङ्कीर्णा" इत्यादिना कल्पानां सात्त्विकादि त्रविध्यं तत्तद्गुणप्राधान्यमूलकस्तद्व्यपदेशो यथा कल्पगुणवता ब्रह्मणा तथा गुणवदेव वर्णनं क्रियते । तामस-राजस-सात्त्विककल्पेषु क्रमेण शिवाग्निब्रह्महरिमाहात्म्यवर्णनानि । सात्त्विकपुराणबोधितपथेन योगसंसिद्धाः परां गतिं लभन्ते ।

एतदुक्तं भवति—आदिक्षेत्रज्ञत्वाद् ब्रह्मणस्तस्यापि केषुचिदहःसु सत्त्वमुद्रिक्तम्, केषुचिद्रजः, केषुचित्तमः। यथोक्तं भगवता—

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः[1] ॥ इति।

"यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मात्" इति श्रुतेः।

ब्रह्मणोऽपि सृज्यत्वेन शास्त्रवश्यत्वेन क्षेत्रज्ञत्वं गम्यते। सत्त्वप्रायेष्वहःसु तदितरेषु च यानि पुराणानि ब्रह्मणा प्रोक्तानि, तेषां परस्परविरोधे सति सात्त्विकाहःप्रोक्तमेव पुराणं यथार्थम्। तद्विबोध्यं यद् यथार्थमिति पुराणनिर्णयायैवेदं सत्त्वनिष्ठेन ब्रह्मणाभिहितमिति। विज्ञायत इति। सत्त्वादीनां कार्यश्च भगवतैवोक्तम्—

सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च[2] ॥

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ! सात्त्विकी[3] ॥

---

ननु जगन्निर्मातुर्ब्रह्मणो गुणवश्यता कथम्? सङ्कीर्णाः सात्त्विकाश्चैवेति वचनं भूयसां बलीयस्त्वमिति न्यायेन बहुभिः पुराणैः स्वस्वार्थप्रमाजनकैर्बाह्यत्वं प्रसजेदिति शङ्कायामाह—एतदुक्तं भवतीति। ब्रह्मापि आदिक्षेत्रज्ञस्तस्य जीवत्वे प्रमाणं भगवद्वचनम्—

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः।
सत्त्वं प्रकृतिजैर्मक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ इति।

"यो वै ब्रह्माणं विदधाति पूर्वम्" इत्यादि श्रुतिश्च "सृज्येन विदधाति बोधितेन वेदांश्च प्रहिणोति तस्मा" इत्यनेन बोधितेन शास्त्रवश्यत्वेन जीवासाधारणधर्मेण क्षेत्रज्ञत्वं जीवत्वं ज्ञापयति। गुणवश्यत्वेन जीवत्वञ्च "न तदस्ति" इत्यनेन गम्यते। सात्त्विकासात्त्विकपुराणप्रोक्तार्थेषु परस्परविरोधे सात्त्विकपुराणादौ बाध्यबाधकभावपूर्वकं निर्णयः, सात्त्विकपुराणस्य प्रावल्यञ्चानभिभूतरजस्तमस्कसत्त्वकार्यबुद्धिकृतत्वप्रयोज्य-

---

१. श्रीमद्भगवद्गीता—१८।४०; २. तत्रैव—१४।१७; ३. तत्रैव—१८।३०।

यया धर्ममधर्मं च कार्यञ्चाकार्यमेव च ।
अयथावत्प्रजानाति बुद्धिः सा पार्थ ! राजसी ॥

अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ ! तामसी[1] ॥ इति ।

सर्वान् पुराणार्थान् ब्रह्मणः सकाशादधिगम्यैव सर्वाणि पुराणानि पुराणकाराश्चक्रुः । यथोक्तम्—

कथयामि यथापूर्वं दक्षाद्यैर्मुनिसत्तमैः ।
पृष्टः प्रोवाच भगवान् अब्जयोनिः पितामहः ॥

अपौरुषेयेषु परस्परविरुद्धेषु कथमिति चेत्, तात्पर्यनिश्चयादविरोधः पूर्वमेवोक्तः ।

---

यथार्थज्ञानजनकत्वेन बाध्यत्वञ्च। इतरपुराणानामभिभूतसत्त्वरजस्तमस्कबुद्धिकृतत्व-प्रयोज्यायथार्थबोधजनकत्वेन सत्त्वस्य रजसः तमसश्च स्वस्वप्रधानस्य प्रमाजनकत्वम्, प्रवृत्तिनिवृत्तिकार्याकार्यभयाभयबन्धमोक्षविषयप्रमाजनकत्वम्,धर्माधर्मकार्याकार्यविपर्यास-जनकत्वम्, धर्माधर्मविपरीतबुद्धिजनकत्वञ्च क्रमेण सत्त्वात्सञ्जायते ज्ञानमित्यारभ्य सर्वार्थान् विपरीतांश्चेत्यन्तेन ग्रन्थेन प्रोच्यते। पराशरादीनां पुराणप्रोक्तृत्वं ब्रह्मणः सकाशादधिगमेनेति। न तत्र ब्रह्मणः प्रोक्तृत्वानुपपत्तिः, पराशरस्य ब्रह्मणोऽधि-गमश्च पुराणस्य "कथयामि यथापूर्वं दक्षाद्यैर्मुनिसत्तमैः, पृष्टः प्रोवाच"इति वचनप्रति-पादितः। पौरुषेयेषु सात्त्विकबुद्ध्यादियोगेन व्यवस्था सम्भवेति। अपौरुषेयेषु परस्पर-विरोधे का गतिरिति न वाच्यम्, अभेदादिश्रुतीनां भेदघटकश्रुत्यविरोधेन तात्पर्य-निश्चयाद्यथा विरोधपरिहारः पूर्वमुक्तस्तथाऽन्यत्रापि श्रुतेर्विरुद्धार्थप्राप्तौ तात्पर्य-निश्चयेनाविरोधः कार्यः। यथा "सोमः पवते" इत्यत्र ऋङ्मन्त्रे योगाद्रूढेर्बलीयस्त्वात्, सोमशब्दस्य उमयासहित इति पदविभागं विना सोमेति पदपारम्पर्याच्च, सोमलता-विषयस्य तत्स्मारकस्य मन्त्रस्य विनियोगाच्च सोमलताविशेषे तात्पर्यं निश्चीयते, न चन्द्रे, नापि रुद्रे।

---

१. श्रीमद्भगवद्गीता—१८।३१–३२।

यद्यपि चेदं विरुद्धवद् दृश्यते प्राणं मनसि । सहकरणैर्नादान्ते परमात्मनि सम्प्रतिष्ठाप्य ध्यायीतेशानं प्रध्यायीतैवं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे सम्प्रसूयन्ते, न कारणम् । कारणं तु ध्येयः, सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये ध्येयः । यस्मात्परं नापरमस्ति, यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्, वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वं ततो यदुत्तरतरं तद्रूपमनामयम् । य एतद्विदुरमृतास्ते भवन्ति । अथेतरे दुःखमेवाभियन्ति ।

सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी च भगवांस्तस्मात्सर्वगतः शिवः ।।

यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः ।
तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी ।। इत्यादि ।

नारायणः परब्रह्मेति च पूर्वमेव प्रतिपादितम् । तेनास्य कथमविरोधः । अत्यल्पमेतत् । वेदवित्प्रवरप्रोक्तवाक्यन्यायोपबृंहिता वेदाः साङ्गाः हरिं प्राहुः जगज्जन्मादिकारणम् । जन्माद्यस्य यतः, यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद् विजिज्ञासस्व

---

पूर्वभागे तात्पर्यादन्यपरत्वेन निर्णयेऽपि उपनिषद्भागे उदाहरिष्यमाणश्रुतिवाक्यानां शिवातिरिक्तदेवपरत्वासम्भवात् कथमविरोध इत्याह—यद्यपीत्यादिना । को ध्येयः ? इति प्रश्ने कारणं ध्येय इति प्रतिवचनात् । यत्र कारणत्वं श्रुत्योच्यते, तस्यैव परत्वमुपास्यत्वं प्राप्यत्वञ्च श्रुतितात्पर्यविषयमिति । कारणं तु ध्येयः, सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये ध्येय इति शिवस्य कारणता ध्येयता ज्ञायते । परापरराहित्यादि । तस्याद्वितीयत्वं तु तस्योपासनया मोक्षप्राप्तिश्च अन्यनिष्ठस्यानिष्टञ्च तस्य सर्वरूपत्वञ्च यस्मात्परं नेत्यादि श्रुतिनिकरेणोक्तानि । नारायणस्य तथास्वरूपवर्णने पूर्वमभिहितमिति विरोधे कथमविरोध उच्यते । वेदवित्प्रवराः मनुव्यासवाल्मीकिमुनयस्तदुपबृंहितास्तद्व्याख्याताः साङ्गा वेदा हरिं जगज्जन्मादिकारणं प्राहुः । तत्र प्रमाणोपन्यासाय कारणवाक्योपन्यासाय च सूत्रपूर्वकं लक्षणवाक्यमाह—जन्माद्यस्य यदित्यादिना । तेन जगज्जन्मादिकारणं ब्रह्मावगतम् ।

ननु जगत्कारणं वस्तु ब्रह्मास्तु, तत्किमिति जिज्ञासायामाह—तच्च विशेषरूपेण जगत्सृष्ट्यादिप्रकरणेषु बोध्यम्, नोपासनपरवाक्येषु । उपासनप्रकरणे कारणमुद्दिश्य

तद्ब्रह्मेति जगज्जन्मादिकारणं ब्रह्मेत्यवगम्यते । तच्च जगत्सृष्टि-प्रलयप्रकरणेष्वेवावगन्तव्यम् । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय-मिति जगदुपादानत्वं जगन्निमित्तता-जगदन्तर्यामितादिमुखेन परमकारणं सच्छब्देनाभिहितं ब्रह्मेत्यवगतम् ।

अयमेवार्थो ब्रह्म वा इदमेकमेवाग्र आसीदिति शाखान्तरे ब्रह्मशब्देन प्रतिपादित. । अनेन सच्छब्देनाभिहितं ब्रह्मेत्यवगतम् । अयमेवार्थः शाखान्तरे आत्मा वा इदमेक एवाग्र आसीत्, नान्यत् किञ्चन मिषदिति, तथा सद्ब्रह्मशब्दाभ्यामात्मैवाभिहितमित्यवगम्यते । तथा च शाखान्तरे "एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि" इत्यादिना सद्ब्रह्मात्मादि परमकारणवादिभिः शब्दैर्नारायण एवाभिहित इति निश्चीयते । यमन्तः समुद्रे कवयः वयन्ति इत्यादि ।

नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ।
न तस्येशे कश्चन तस्य नाम महद्यशः ॥

न सदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ॥ इति ।

---

ध्यानं विधीयते । सृष्टिप्रकरणे कारणत्वेनावगतस्य ब्रह्मणो विशेषरूपता विधीयते । ब्रह्मपदेन विशेषार्थजिज्ञासया सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति जगदुपादानता, सच्छब्देन अद्वितीयपदेन तन्निमित्तता, सत्पदेनैवान्तर्यामिता च बोधिता । तन्मुखेन परमकारणं ब्रह्म सच्छब्देनाभिहितम् ।

सर्वशाखाप्रत्ययन्यायेन कारणवाक्यानां शाखान्तरोक्तानामैकार्थ्यमुक्तमिति । ब्रह्म वा इदमेकमेवाग्र आसीदिति शाखान्तरे शाखान्तरीयसच्छब्दवाच्यन्तत्वं ब्रह्मरूपं पर्यवसन्नम् । सच्छब्दप्रतिपाद्यं वस्तु स्वरूपतो गुणतो विभुत्वशालि बोध्यम् । उक्त-न्यायेनैव ब्रह्मरूपं वस्तु आत्मा वा इदमेक एवाग्र आसीदिति शाखान्तरीयात्मशब्द-प्रतिपाद्यार्थं चेतनरूपं पर्यवसन्नम् । तस्यापि पशुच्छागन्यायेन "एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि इत्यादि" इति कारणवाक्यघटक-नारायणपदप्रतिपाद्यदेवविशेषरूपं पर्यवसन्नमिति । सद्ब्रह्मात्मादिशब्दैः परमकारण-वादिभिर्नारायण एवाभिहित इति निश्चीयते, एकप्रकरणाम्नातसामान्यविशेष-वाचकयोः सामान्यस्य विशेषार्थपरत्वमिति न्यायात् । सर्वशाखाप्रत्ययन्यायेनैकतत्त्वं

सर्वस्मात् परत्वमस्य प्रतिपाद्य न तस्येशे कश्चन इति तस्मात्परं न किमपि विद्यत इति प्रतिषिध्य अद्भ्यः सम्भूतो हिरण्यगर्भ इति, अष्टाविति। तेनैकवाक्यतां गमयति। तच्च महापुरुषप्रकरणम् ( श्रीश्च ते लक्ष्मीश्च पत्न्यौ ) इति नारायण एवेति द्योतयति। अयमेवार्थो नारायणानुवाके प्रपञ्चितः। सहस्रशीर्षदेवमित्यारभ्य सब्रह्मा सशिवस्सेन्द्रः सोऽक्षरः परमः स्वराडिति। सर्वशाखासु परतत्त्वप्रतिपादनपरानक्षरशिवशम्भु-परब्रह्म-परज्योतिः परतत्त्वपरायणपरमात्मादिसर्वशब्दान् तत्तद्गुणयोगेन नारायण एव प्रयुज्य, तद्व्यतिरिक्तस्य समस्तस्य तदायत्ततां तद-

---

कारणवाक्यैर्बोध्यम्, तच्चोक्तन्यायेन कारणवाक्योक्तविशेषवस्तुरूपमिति तात्पर्यम्। नारायणपदघटितकारणवाक्ये ह वैशब्देनानुवादसूचकेनाकाशवाक्यवदनुवादरूपत्वं न शङ्क्यम्, "यदाग्नेयोऽष्टाकपाल" इति वाक्यस्यानुवादसमर्पकयच्छब्दसत्त्वेऽपि स्वतः-प्राप्तत्वेन आग्नेययागविधिभञ्जकत्वाभावात्। विधित्वविच्छेदे हि ह वैशब्दो हि, अनुवादसमर्पकाकाशपदस्य तु अयोग्यत्वेन विधित्वविच्छेदात् शिव एवेत्यनेन विधित्व-भङ्गो न शङ्क्यः, शिवशब्दस्य कल्याणादिसामान्यार्थपरत्वेन सामान्यशब्दत्वेन विधित्व-भञ्जकत्वाभावात्, सामान्यशब्दस्यापि विधित्वभञ्जकत्वे सच्छब्देन विधित्वे भग्ने शिवस्यापि अनुवादत्वापत्तेर्विष्णुस्तदासीद्धरिरेव केवल इति समानार्थानुवादस्यैव युक्ततरत्वाच्च। तस्मात्प्रमाणान्तराप्राप्तत्वान्नारायणशब्दस्यैव विशेषदेवरूपपरम-कारणविधायकत्वेन ह वैशब्दस्य विधित्वभञ्जकत्वम्। शिवस्य कारणत्वे न ब्रह्मा नेशान इत्युत्तरवाक्यासङ्गतिः, शूलपाणिरजायतेति उत्तरवाक्यव्याहृतिश्च। 'यमन्तः-समुद्रे' इति क्षीरशायित्वलिङ्गेनास्य प्रकरणस्य नारायणपरत्वं विद्युतः पुरुषादिति विद्युद्वर्णत्वलिङ्गेनापि तत्। नैनमूर्ध्वं न तिर्यञ्चमिति जगत्कारणत्वादिसिद्धपरत्वं तस्य बोध्यते, तेनापि नारायणस्य कारणत्वं द्रढयति। "अद्भ्यः सम्भूत" इति श्रुतय उत्तर-नारायणसंज्ञास्ताभिरैककण्ठ्याच्च पूर्वश्रुतीनां नारायणपरत्वम्। 'अद्भ्यः' इत्यादीनां नारायणपरत्वं तु "श्रीश्च ते लक्ष्मीश्च" इति लक्ष्मीपतीत्वलिङ्गात्, तदाह—**नारायण एवेति**। द्योतयति इति, महापुरुषशब्दो नारायण एव प्रयुज्यते, महादेवं महापुरुषं वाचयेदिति वचनात्। नारायणानुवाकेनैकवाक्यत्वाद्धिरण्यगर्भ इत्यादिकमपि नारायण-परम्। नारायणानुवाके नारायणदेवविशेषस्य परमकारणत्वे प्रमाणमित्याह—प्रपञ्चित इति। तत्प्रकारञ्चेत्थम्—सहस्रशीर्षमित्यारभ्य स नारायणः शिवादिरित्युक्त्या सर्वशाखासु शिवादिपदेनोपास्यतया विहितो देवो नारायण इति सर्वविद्यासु परतत्त्व-प्रतिपादनपरा अक्षरादिपरमात्मान्ता मूलपरिगणिताः शब्दा नारायणे तत्तद् गुणयोगेन प्रयुक्ताः।

व्याप्यतां तदाधारतां तन्नियाम्यतां तच्छेषतां तदात्मकतां च प्रतिपाद्य ब्रह्मशिवयोरपि इन्द्रादिसमानाकारतया तद्विभूतित्वञ्च प्रतिपादितम्। इदं च वाक्यं केवलपरतत्त्वप्रतिपादनैकपरम्। अन्यत् किञ्चिदप्यत्र न विधीयते। अस्मिन् वाक्ये प्रतिपादितस्य सर्वस्मात्परत्वेनावस्थितस्य ब्रह्मणो वाक्यान्तरेषु ब्रह्मविदाप्नोति परमित्यादिषूपासनादि विधीयते।

---

अथ तद्व्यतिरिक्तस्य नारायणपरत्वादि प्रतिपाद्य ब्रह्मशिवयोरपि इन्द्र-स्वराऽऽदिवत् जगत्कारणत्वप्रतिपादनेन भगवद्विभूतित्वमुक्तम्। भगवतः पृथक्-सिद्धविशेषणत्वकृतमित्यर्थः। उक्तेनैव न्यायेन, अर्थात् कारणवाक्यैर्नारायणस्यैव परमकारणत्वप्रतिपादनात्, अनन्यपरनारायणानुवाकेन तस्यैव परतत्त्वनिश्चयात्, ब्रह्मरुद्रादीनां तत्सृज्यत्व-संहार्यत्वश्रवणाच्चार्थान्तरेषु शिवादिशब्दानामर्थान्तरेषु दृष्टानां साधारणत्वात्, शिवादिशब्दविशेषे नारायणपरत्वेन प्रयोगदर्शनाच्च, बह्वीषूपनिषत्सु कारणवाक्येषु नारायणविष्ण्वादिशब्दनिर्देशाच्च, एकैकत्रोपनिषदि कारणतया नारायणशब्दाभ्यासाच्च शिवादिशब्दोऽपि सद्ब्रह्मादिशब्दविशेष-नारायणपरदेवतापर्यवसायी। किञ्च, न केवलं प्रकरणान्तरवाक्यैर्नारायणपरत्वनिर्णयः; अपि तु पूर्वापरपर्यालोचनयापि। तथा हि न तस्येशे कश्चनेति वचनसिद्धनिरस्तसमाभ्य-धिकस्य पुरुषस्याणोरणीयांसमित्यनुवाके वेदस्योत्पादकत्वात्तल्लयःस्थानत्वात्। प्रणवो वेदाद्यन्तस्तस्य प्रणवस्य प्रकृतिरकारस्तद्वाच्यत्वे प्रकारवाच्यत्वेन पुरुषस्य महेश्वरत्वं प्रतिपाद्य दहरपुण्डरीकम्, हृदयाकाशवर्त्तिकमलाकारतत्त्वं तन्मध्यस्थमा-काशम्, तन्मध्यवर्त्तितयोपास्यतोक्ता। इत्थं पूर्ववाक्येन परतमतयोपास्यतया निर्णीता-दन्यस्य कस्यचिद्देवस्योत्तरवाक्ये परत्वप्रतिपादनेन पूर्वापरश्रुतिविरोधः स्यादिति नारायणस्यैव शिवशब्देनोपसंहारकवाक्यमिदमपि।

ननु दहरविद्याप्रकरणत्वात्तच्छेषत्वमेव नारायणानुवाकस्यास्तु इति चेत्, न, प्रकरणाद् वाक्यस्य बलीयस्त्वेनैकार्थोपास्यदेवबोधनपरवाक्यत्वाविशेषेण प्रकरणान्तर-वाक्येन जुह्वा जुहोतीत्यनेन विहिता होमसाधनत्वेन जुहूमुद्दिश्य प्रकरणान्तरस्थेन न यस्य पर्णमपि जुहुरिति वाक्येन पर्णमयत्वं विधीयते, तथा वाक्यप्रमाणेन सर्वविद्यासु उपास्यतयापेक्षितो देवो नारायणो विधीयते। इदं नारायणानुवाकवाक्यं परतत्त्वप्रति-पादनपरं न शिवादिदेवपरम्, अत्रैव परतत्त्वलिङ्गस्य सत्त्वादिति अनन्यनारायणपरमेव। यथा जुह्वा जुहोतीत्यत्र होमसाधनतया विहिताया जुह्वाः द्रव्यविशेषाकांक्षायां यस्य पर्णत्रयीमित्यनेन पर्णमयत्वं विधीयते, तथा तत्तद् विद्यासु उपास्यत्वेन विहितं वस्तु किमित्याकांक्षायां शिवादिशब्दे अप्रतीयविज्ञातं सामान्यतया उद्दिश्य नारायणत्वं विधीयते। नारायणानुवाकेन नारायणानुवाके परत्वेन स्थितस्य "ब्रह्मविद् ब्रह्माप्नोति परम्" इत्यनेनोपासना विधीयते।

अतः प्राणं मनसि सहकरणैरित्यादि वाक्यम् । सर्वकारणे परमात्मनि करणप्राणादि सर्वं विकारजातमुपसंहृत्य तमेव परमात्मानं सर्वस्येशानं ध्यायीतेति परब्रह्मभूतनारायणस्यैव ध्यानं विदधाति । पतिं विश्वस्येति, न तस्येशे कश्चनेति च तस्यैव सर्वस्येशानता प्रतिपादिता । अत एव सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये ध्येयः । नारायणस्यैव परमकारणस्य शम्भुवाच्यस्य ध्यानं विधीयते, कश्च ध्येय इत्यारभ्य कारणं तु ध्येय इति कार्यस्याध्येयतापूर्वकं कारणैकध्येयतापरत्वाद् वाक्यस्य तस्यैव नारायणस्य परमकारणता शम्भुशब्दवाच्यता च परमकारणप्रतिपादनैकपरे नारायणानुवाक एव प्रतिपन्नेति तद्विरोध्यान्तरपरिकल्पनं कारणस्यैव ध्येयत्वेन विधिवाक्येन युज्यते । यदपि ततो यदुत्तरतरमित्यत्र पुरुषादन्यस्य परतरत्वं प्रतीयत इति अभ्यधायि, तदपि

---

अत एव कारणवाक्यैः पुरुषसूक्तेन अनन्यार्थनारायणानुवाकादिभिश्च परमकारणत्वेन नारायणस्य प्रतिपन्नत्वादेव ब्रह्मशिवयोः तत् सृज्यत्व-संहार्यत्वश्रवणाच्च प्राणं मनसि सहकरणैरित्यादि वाक्यं करणप्राणादिसर्वविकारवर्गं सर्वकारणे परमात्मनि उपसंहृत्य परमात्मशरीरत्वेनानुसन्धाय तमेव नारायणमेव परमात्मानमिति सर्वस्येशानं ध्यायीतेति वाक्येन नारायणस्यैव ध्यानं विदधाति । पतिं विश्वस्येत्यादिना नारायणस्यैवेशानं तत्प्रतिपादितम् । परमकारणत्वेन ध्येयतया पूर्वोक्तसत्तर्केण नारायणप्रतिपन्नत्वादेव सर्वेश्वरः शम्भुराकाशमध्ये ध्येय इति वचनेन शम्भुपदवाच्यो नारायण एव ध्येयतया विधीयते । कश्च ध्येय इत्यारभ्य कारणं तु ध्येय इति श्रुत्या कार्याध्येयतापूर्वककारणध्येयतापरत्वान्निरुक्तवाक्यस्य शम्भुराकाशे इति वाक्यस्य यतो नारायणस्यैव शम्भुपदवाच्यत्वकारणत्वादिपरमकारणानन्यपरे नारायणानुवाके प्रतिपन्नं कारणत्वमनूद्य ध्येयता विधीयते, अनुवादत्वेन वाक्यान्तरे सापेक्षत्वात् । नारायणानुवाकादिभिस्तस्यैव नारायणस्यैव परमकारणत्वं प्रतिपन्नम् शिवादेः सद्ब्रह्मादिशब्दवच्छम्भुशिवादिशब्दानामपि साधारणत्वात्, तस्यापि विशेषरूपतासमर्पकवाक्यसाकाङ्क्षत्वेन नारायण एव पर्यवसन्नत्वात् । यदपि ततो यदुत्तरतरमित्यादिवाक्यैः पुरुषान्नारायणात् परतरश्शिवोऽस्ति,तस्योपासनया दुःखं तरति नान्यथा । तन्न युक्तम्, ततो यदुत्तरतरमिति श्रुतेः । पूर्वं यस्मात्परं नापरमस्ति किञ्चिदिति यस्मान्नारायणादपरमन्यत् परमुत्कृष्टं नास्ति । "यस्मान्नाणीयो न ज्यायोऽस्ति","नारायणाद् सूक्ष्मं ज्यायः श्रेष्ठं नास्ति"इत्यर्थपरे श्रुतिवचने "तमेव विदित्वा मृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति वाक्यबोध्यान्यपथनिषेधसमर्थनपरे स्तः । एतदुत्तरं यदुत्तरमिति

यस्मात्परं नापरमस्ति किञ्चिद् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्, यस्मादपरं यस्मादन्यत् किञ्चित्परं नास्ति। केनापि प्रकारेण पुरुषव्यतिरिक्तस्य परत्वं नास्तीत्यर्थः। अणीयस्त्वं सूक्ष्मत्वं ज्यायस्त्वं सर्वेश्वरत्वं सर्वव्यापित्वात् सर्वेश्वरत्वादस्यैतद् व्यतिरिक्तस्य वा कस्याप्यणीयस्त्वं ज्यायस्त्वञ्च नास्तीत्यर्थः। "यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्" इति पुरुषादन्यस्य कस्यापि ज्यायस्त्वं निषिद्धमिति। तस्मादन्यस्य परत्वं न युज्यत इति प्रत्युक्तम्। कस्तर्ह्यस्य वाक्यार्थः? अस्य प्रकरणस्योपक्रमे "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति पुरुषवेदनस्यां तत्त्वहेतुतां तद्व्यतिरिक्तस्यापथताञ्च प्रतिज्ञाय "यस्मात्परं नापरमस्ति किञ्चित् तेनेदं पूर्णं पुरुषेण सर्वम्" इत्यनेन पुरुषस्य सर्वस्मात्परत्वं प्रतिपादितम्। यतः पुरुषतत्त्वमेवोत्तरतरं ततो यदुत्तरतरं पुरुषतत्त्वं तदेवारूपमनामयं "य एतद् विदुरमृतास्ते भवन्ति। अथेतरे दुःखमेवाभिग्नन्ति" इति पुरुषवेदनस्याऽमृतत्वहेतुत्वं तदितरस्य चापथत्वं प्रतिज्ञातं सहेतुकमुपसंहृतम्। अन्यथोपक्रमगतप्रतिज्ञाऽस्यां विरुद्ध्यते, पुरुषस्यैव शुद्धिगुणयोगेन शिवशब्दाभिधेयत्वं शाश्वतं शिवमच्युतमित्यादिना

---

वाक्यमस्ति, तस्य पूर्णनिर्णयाविरोधेनार्थो वर्णनीयः। तथा हि सर्वश्रुतिगणैर्निर्णीतः पुरुषः सर्वश्रेष्ठो रूपरहितः प्राकृतरूपरहितस्तस्यैव ज्ञानेन मोक्षोऽन्यथा संसारः। त्वदीयार्थस्वीकारे पूर्वापरविरोधः स्यात्। तदाह मूले—यस्मात्परमित्यादिना प्रयुक्तमित्यन्तेन, को वाक्यार्थ इत्यारभ्य विरुध्यत इत्यन्तेन च। ब्रह्मव्यतिरिक्तस्य सूक्ष्मत्वेन श्रेष्ठत्वेन न केनापि रूपेण श्रेष्ठत्वमिति भावः। पुरुषस्यैव वादिप्रतिवादिनिर्णीततच्छब्दयनारायणस्यैव शुद्धिगुणयोगेन शिवशब्दाभिधेयता। शाश्वतं शिवमच्युतमित्यादिना नारायणे नारायणपरेण वाक्येनावगतमेव। "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इत्यत्रैषपदेन शिवशब्दाभिधेय एव गृहीतस्तस्य पुरुषपदेन सामानाधिकरण्यम् इत्याहानन्तरमेव वदतीति। "एवं कारणं ध्येय" इति वाक्यबलाद् उपास्यविशेषनियमेन नारायणानुवाकेन नारायणस्यैव परत्वमुक्तम्। तेन तस्य नारायणपरत्वं कारणवाक्येन, "न सन्न चासच्छिव" इति परत्वकारणवाक्यात्, उपास्यनिर्णयपरवचनाच्च।

**ज्ञातमेव। पुरुष एव शिवशब्दाभिधेयः, इत्यनन्तरमेव वदति—"महान् प्रभुर्वै पुरुषः, सत्त्वस्यैष प्रवर्तकः" इति।**

**उक्तेनैव न्यायेन "न सन्न चासच्छिव एव केवलः" इत्यादि सर्वं नेयम्। किञ्च, न तस्येशे कश्चनेति निरस्तसमाभ्यधिकसम्भावनस्य पुरुषस्य "अणोरणीयान्" इत्यस्मिन्ननुवाके वेदाद्यन्तरूपतया वेदबीजभूतप्रणवस्य प्रकृतिभूताकारवाच्यतया महेश्वरत्वं प्रतिपाद्य दहरपुण्डरीकमध्यस्थाकाशान्तरवर्तितयोपास्यत्वमुक्तम्।**

**अयमर्थः—सर्वस्य वेदजातस्य प्रकृतिः प्रणव उक्तः, प्रणवस्य च प्रकृतिरकारः, प्रणवविकारो वेदः स्वप्रकृतिभूते प्रणवे लीनः, प्रणवोऽप्यकारविकारभूतः, स्वप्रकृतावकारे लीनस्तस्य प्रणवप्रकृतिभूतस्याकारस्य यः परो वाच्यः, स एव महेश्वर इति सर्ववाचकजातप्रकृतिभूताकारवाच्यजातप्रकृतिभूतनारायणो महेश्वरः। यथोक्तं भगवता—**

---

अथ नारायणपदवाच्यपरत्वमित्याशङ्क्याह—**उक्तेनैव न्यायेनेति।** विद्याकारणत्ववाक्यैर्नारायणस्यैव परमकारणतयोपादानात्। अनन्यपरनारायणानुवाकेन तस्यैव परतत्त्वनिश्चयात्, ब्रह्मरुद्रादीनां तत्र सृज्यत्व-संहार्यत्वश्रवणाच्च। अर्थान्तरेषु शिवादिशब्दानामर्थान्तरेषु दृष्टानां साधारणत्वात्, शिवादिशब्दानां नारायणपरत्वेन प्रयोगदर्शनाच्च। बह्वीषु उपनिषत्सु कारणवाक्येषु नारायणविष्ण्वादिशब्दनिर्देशाच्च। एकैकमेवोपनिषदि कारणतया नारायणशब्दाभ्यासाच्च। शिवादिशब्दोऽपि सद्ब्रह्मादिशब्दवद् विशेषनारायणपरदेवतापर्यवसायी। किञ्च, न केवलं प्रकरणान्तरवाक्यैर्नारायणपरत्वनिर्णयः; अपि तु पूर्वापरपर्यालोचनयापि। तथा हि न तस्येशे कश्चनेति वचनसिद्धनिरस्तसमाभ्यधिकस्य पुरुषस्याणोरणीयांसमित्यनुवाके वेदस्योत्पादकत्वाल्लयस्थानत्वात् प्रणवो वेदाद्यन्तस्तस्य प्रणवस्य प्रकृतिरकारस्तद् वाच्यत्वेन पुरुषस्य महेश्वरत्वं प्रतिपाद्य दहरपुण्रीकं हृदयाकाशवर्तिकमलाकारतत्त्वं तन्मध्यस्थमाकाशं तन्मध्यवर्तितयोपास्यतोक्ता। इत्थं पूर्ववाक्येन परत्वस्योपास्यता निर्णीता। अन्यस्य कस्यचिद् दैवत्यान्तरवाक्येन परप्रतिपादने पूर्वापरश्रुतिविरोधः स्यादिति नारायणस्यैव शिवशब्देनोपसंहारकवाक्यमिदमपि।

प्रणववेदयोरकारप्रणवयोश्च प्रकृतिविकृतिभावमकारस्य प्रसङ्गेऽकारवाच्यत्वसमर्पकशब्दश्च बोधयितुमुपक्रमते—**अयमर्थ इति।** "यद्वेदादौ स्वरः प्रोक्तो यो वेदान्ते प्रतिष्ठितः" इत्यनेन वेदादित्वाद् वेदोत्पादकत्वाद् वेदान्तत्वाद् वेदलयस्थानत्वात् प्रणववेदयोः 'प्रकृतिविकृतिभावः प्रोच्यते। प्रकृतिलीनस्य—अकाररूपप्रकृति-

अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ![1]॥

"अक्षराणामकारोऽस्मि", "अ इति ब्रह्म"इति च श्रुतेः । "अकारो वै सर्वा वाक्" इति च वाचकजातस्याकारप्रकृतित्वं वाच्यजातस्य ब्रह्मप्रकृतित्वं च सुस्पष्टम् । अतो ब्रह्मणोऽकारवाच्यताप्रतिपादनादकारवाच्यो नारायण एव महेश्वर इति सिद्धान्तस्यैव सहस्रशीर्षदेवमिति केवलं परतत्त्वविशेषप्रतिपादनपरेण नारायणानुवाकेन सर्वस्मात् परत्वं प्रपञ्चितम् । अनेनानन्यपरेण प्रतिपादितमेव परतत्त्वमन्यपरेषु सर्ववाक्येषु केनापि शब्देन प्रतीयमानं तदेवेत्यवगम्यत इति । शास्त्रदृष्ट्या तु उपदेशो वामदेववदिति सूत्रकारेण निर्णीतम् । तदेतत्परब्रह्म क्वचिद् ब्रह्मशिवादिशब्दादवगतमिति केवलं ब्रह्मशिवयोर्न परत्वप्रसङ्गः, अस्मिन्ननन्यपरेऽनुवाके तयोरिन्द्रादितुल्यतया तद्विभूतित्वप्रतिपादनात् क्वचिदाकाशप्राणादिशब्देन परं ब्रह्माभिहितमिति भूताकाशप्राणादेर्यथा न परत्वम् ।

---

लीनस्याकारावस्थप्रणवस्येति । 'अकारः स्मृतो य पर' इति परशब्देन अकारवाच्योऽभिप्रेतः 'परस्तात्पर' इत्यत्र परशब्दस्य वाच्यपरत्वात्, इत्याह—सर्वस्येत्यादिना महेश्वर इति ग्रन्थेन । अकारस्य वाच्यः पर इत्यनुक्त्वा प्रकृतिलीनस्येति उक्तेर्नारायणस्य महेश्वरस्वोक्तेश्चैतदवगम्यते । सर्ववाचकानामाब्रह्मस्तम्बपर्यन्तशब्दानां जातः समूहस्तस्य मूलमकारस्तस्य वाच्यार्थः सकलवाच्यानामाब्रह्मस्तम्बपर्यन्तानामर्थानां जातं समूहस्तस्य प्रकृतिः कारणं नारायणः, स महेश्वर इति । यथोक्तं भगवतेत्यनेनाकारस्य शब्दजातमूलत्वे नारायणस्यार्थजातमूलत्वे प्रमाणमाह—"अहं कृत्स्नस्य जगतः" इत्यादि । "अक्षराणामकारोऽस्मि","अ इति ब्रह्म" इति श्रुतेः, "अकारो वै सर्वा वाक्" इति चोक्तार्थं निगमयति । "अकारेणोच्यते विष्णुः सर्वलोकमहेश्वरः" इत्यनेन पूर्वप्रमाणेन ब्रह्मणोऽकारवाच्यतया महेश्वरशब्दस्य साधारणत्वाद् अकारवाच्यो नारायण एवेति सिद्धम्। उत्तरानुवाके नारायणस्यैव तत्तच्छब्दवाच्यतया परत्वं स्पष्टमुक्तम् । सहस्रशीर्षदेवमिति अनन्यपरवाक्येन प्रतिपादितमेव परतत्त्वमन्यपरवाक्येषु 'विश्वाधिको रुद्र' इत्यादि वाक्येषु रुद्रादिशब्दैस्तदेव प्रतीयमानं बोध्यं केनापि शब्देन प्रतीयमानं वस्तु नारायणः । इममर्थं शास्त्रं तूपदेशो वामदेववदिति सूत्रेण व्यासो निर्णिनाय । तथा हि प्रतर्दनविद्यायामिन्द्रः शास्त्रदृष्ट्या अनेन जीवेनेत्यादिना स्वस्मिन् सर्वत्र चान्तर्यामिणं तत्त्वमवलोक्य प्रतर्दनमुवाच —मामुपास्येति । तथा वामदेवोऽपि मुक्तावस्थायामपरमात्म-

यत्पुनरिदमाशङ्कितम्—अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरेऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्, तद्वाव विजिज्ञासितव्यमिति। अथाकाशशब्देन जगदुपादानकारणं प्रतिपाद्य तदन्तर्वर्त्तिनः कस्यचित्तत्त्वविशेषस्यान्वेष्टव्यता प्रतिपाद्यते। अस्याकाशस्य नामरूपयोर्निर्वाहकत्वश्रवणात् पुरुषसूक्ते पुरुषस्य नामरूपयोः कर्तृत्वदर्शनाच्चाकाशपर्यायभूतात्पुरुषादन्यस्यान्वेष्टव्यतयोपास्यत्वं प्रतीयत इति अनधीतवेदानामदृष्टशास्त्रविदामिदं चोद्यम्। यतस्तत्र श्रुतिरेवास्य परिहारमाह। वाक्यकारश्च "दहरेऽस्मिन्नन्तरादाकाशस्तावानेषोऽन्तरहृदय आकाशः" इत्यादिना अस्याकाशशब्दवाच्यस्य परमपुरुषस्यानवधिकमहत्त्वं सकलजगत्कारणतया सकलजगदाधारत्वञ्च प्रतिपाद्य तस्मिन् कायाः समाहिता इति अपहतपाप्मत्वादि सत्यकामशब्देन सत्यसङ्कल्पपर्यन्तगुणाष्टकं निहितमिति परमपुरुषवत् परमपुरुषगुणाष्टकस्यापि पृथग् विजिज्ञासितव्यत्वप्रतिपिपादयिषया तस्मिन् यदन्तस्तदन्वेष्टव्यमित्युक्तमिति श्रुत्यैव सर्वं परिहृतम्।

---

पर्यन्तं स्वदृष्ट्याऽऽह—अहं मनुरहं ब्रह्मेति। तेन शिवादिना प्रतीयमानं तत्त्वं नारायण एव। यथा क्वचिदाकाशादिन्द्रात् सृष्टिश्रवणेन न तयोर्जगतः कारणत्वं परत्वञ्च, तथा ब्रह्मशिवादिना क्वचित्प्रतीयमानमपि, तन्न, तयोः परत्वं कारणत्वमुपादेयम्। अस्मिन्ननन्यपरेऽनुवाके शिवब्रह्मानन्यपरेऽनुवाके विश्वाधिको रुद्रो महर्षिप्रजापतिः प्रजा असृजदित्यादौ ब्रह्मरुद्रयोरिन्द्रादिवद् विष्णुवैभवं त्रिकालज्ञब्रह्मशिवशरीरकत्वेन विभुत्वं सर्वेश्वरत्वं प्रतिपादयितुम् अचिराकाशादिवत्।

अथ परमव्योमातीतशिवतत्त्वस्य निराकरणम्। तत्र शैवा वदन्ति यदिदमस्मिन् पुरे दहरं पुण्डरीकं वेश्म, दहरेऽस्मिन् आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यमिति। शरीरमिदं ब्रह्मणो हि पुरमुपास्यत्वाय सदा निवासाद् देहस्य नव द्वारत्वात्, तस्मिन् हृदयं कमलम्, तत्राकाशस्तदन्तः शिवतत्त्वमुपास्यम्, आकाशपदार्थस्य श्रुत्या नामरूपनिर्वाहकत्वश्रवणात्, पुरुषसूक्तेऽपि नारायणस्य नामरूपनिर्वाहकत्वश्रवणात्। द्वयोरैक्याय आ समन्तात् काशते प्रकाशत इति व्युत्पत्त्या आकाशः स्वयंप्रकाशो नारायणस्तत्र शिवतत्त्वमन्वेषणीयमुपासनीयमिति वदन्ति। तदनधीतवेदानां दृष्टशास्त्राणां वचनम्, तदुक्तार्थस्य श्रुत्यैव परिहारात्। तथा हि दहरेऽस्मिन्नन्तराकाशः। किं तत्र विद्यते यदन्वेष्टव्यम् इति चोदिते पृष्टे यावानयमाकाशस्तावानेषोऽन्तर्हृदयः। आकाश इत्यादिना आकाशशब्दवाच्यस्य परमपुरुषस्यानवधिकमहत्त्वं प्रतिपाद्य

एतदुक्तं भवति—किं तदत्र विद्यते यदन्वेष्टव्यमित्यस्य चोद्यस्यास्मिन् सर्वस्य जगतः स्रष्टृत्वमाधारत्वं नियन्तृत्वं शेषित्वमपहतपाप्मत्वादयो गुणाश्च विद्यन्त इति परिहारः। तथा च वाक्यकारस्तस्मिन् यदन्तरिति कामव्यपदेश इति, काम्यन्त इति कामा अपहतपाप्मत्वादयो गुणा इत्यर्थः। एतदुक्तं भवति—यदेतद् दहराकाशपदवाच्यं निखिल-जगदुदयविभवलयलीलपरमब्रह्म तस्मिन् यदन्तर्निहितमनवधिकातिशय-मपहतपाप्मत्वादि गुणाष्टकम्, तदुभयमप्यन्वेष्टव्यं विजिज्ञासितव्यमिति।

यथाह य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामाचारो भवति, इति यः पुनः कारणस्यैव ध्येयताप्रति-पादनपरवाक्ये विष्णोरनन्यपरवाक्यप्रतिपादितपरतत्त्वभूतस्य कार्यमध्य-निवेशः, स स्वकार्यभूततत्त्वसंख्यापूरणं कुर्वतः स्वलीलया जगदुपकाराय स्वेच्छावतार इत्यवगन्तव्यः। यथा लीलया देवसंख्यापूरणं कुर्वत उपेन्द्र-त्वं परस्यैव, यथा च सूर्यवंशोद्भवराजसंख्यापूरणं कुर्वतः परस्यैव ब्रह्मणो दाशरथिरूपेण स्वेच्छावतारः, यथा च सोमवंशसंख्यापूरणं कुर्वतो भगवतो भूभारावतरणाय स्वेच्छया वसुदेवगृहेऽवतारः, सृष्टिप्रलयप्रकरणेषु नारायण एव परमकारणतया प्रतिपाद्यत इति पूर्वमेवोक्तम्। यत् पुनरथर्वशिरसि

---

जगत्कारणत्वादिना प्रतिपाद्य तस्मिन् कामाः समाहिता इत्यनेन काम्यन्त इति कामाः अपहतपाप्म-सत्यकाम-सत्यसङ्कल्पादिपदवाच्याऽपहतपाप्मत्वादयो गुणाः पृथक्तया उपास्यत्वेन विहिताः, न शिवतत्त्वं तथा, इत्याह—विद्यन्त इति परिहार इत्यन्तेन। तस्मिन् यदन्तरिति कामव्यपदेश इति वाक्यकारवचनेनान्तःपदेन काम्यमाना स्रष्टृत्व-जगदाधारत्वादयो गुणा एवोपास्यत्वेन विवक्षिताः।

एतदुक्तं भवति दहराकाशपदवाच्यं यद् ब्रह्म तस्मिन् यदन्तर्निहितमनवधिका-तिशयमपहतपाप्मत्वादिगुणाष्टकम्, तदुभयं ब्रह्म, तच्च गुणाष्टकम् पृथगुपास्यमेव। यथाह—अन्यश्रुतौ आत्मोपासनपूर्वकं तदीयसत्यकामत्वादि उपासते, तेषां सर्वेषु लोकेषु यदेच्छयाविर्भवति, तथा तत्रापि। 'ब्रह्मविष्णुरुद्रादयः प्रसूयन्ते' इत्यत्र उपासनावाक्य एव परतत्त्वस्य जन्यत्वप्रतिपादनम्। तत् स्वकार्यभूततत्त्वसंख्यापूरणं कुर्वतः लीलया जगदुपकाराय स्वेच्छावतार इत्यवगन्तव्यम्। जगतामुपकाराय न सा कर्म-निमित्तजेति वचनाद् भगवतो यत्र तत्र जन्मकीर्त्तनं न कर्मजम्; अपि तु स्वेच्छया।

रुद्रस्य सर्वैश्वर्यं प्रपञ्चितम्, तज्ज्ञोऽन्तरादन्तरं प्राविशदिति परमात्मप्रवेशादुक्तमिति श्रुत्यैव व्यक्तम् । शास्त्रदृष्ट्या तूपदेशो वामदेववदिति सूत्रकारेणैव मादीनामर्थः प्रतिपादितः ।

यथोक्तं प्रह्लादेनापि—

सर्वगत्वाद् अनन्तस्य स एवाहमवस्थितः ।
मत्तः सर्वमहं सर्वं मयि सर्वं सनातने ।। इत्यादि ।

अथ सर्वगत्वादनन्तस्येति हेतुरुक्तः । स्वशरीरभूतस्य सर्वस्य चिदचिद्वस्तुन आत्मत्वेन सर्वगतः परमात्मेति सर्वे शब्दाः सर्वशरीरं परमात्मानमेवाभिदधतीत्युक्तम्, अतोऽहमिति शब्दः स्वात्मप्रकारिणं परमात्मानमेवाचष्टे । अत इदमुच्यते—"आत्मेत्येव तु गृह्णीयात्सर्वस्य तन्निष्पत्तेः" इत्यादिनाऽहंग्रहणोपासनम् । वाक्यकारेण कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमात्मैवेति सर्वस्य तन्निष्पत्तेरित्युक्तम् । आत्मेति तूपगच्छन्ति ग्राहयन्ति चेति सूत्रकारेण, महाभारते च ब्रह्म-

---

स्वमानसंख्यापूरणं नाम स्वसमानगणनागण्यतत्त्वख्यापनम्, सूर्यवंश्यानां सोमवंश्यानां देववंश्यानाञ्च स्वसमानगणनागण्यत्वख्यापनाय रामकृष्णोपेन्द्रत्वादयः परस्यैव नारायणस्य । यत्तु रुद्रेणाथर्वशिरसि स्वस्य सर्वेश्वरत्वं प्रपञ्चितम्, तत् शास्त्रदृष्ट्या तूपदेशो वामदेववदित्यनेन समाहितम् । रुद्रो ब्रह्मपर्यन्तं स्वयमवलोक्य नारायणस्य गुणान् वर्णयति, इत्युक्तम्—प्रतिपादित इत्यनेन मूलेन ।

सर्वशब्दसामानाधिकरण्यस्य परमात्मानुप्रवेशकृतत्ववैशद्याय पुराणवचनानि उद्धरति—**यथोक्तमिति** ।

सर्वगत्वादनन्तस्य स एवाहमवस्थितः ।
मत्तः सर्वमहं सर्वं मयि सर्वं सनातने ।।

अथाहमर्थस्य तदर्थाभिन्नत्वे तदहंशब्दयोः सामानाधिकरण्ये चानन्तस्य सर्वगत्वादिति हेतुरुक्तः । सर्वचिदचितोः शरीरयोरात्मतयावस्थितः परमात्मेति । सर्वशब्दाः सर्वशरीरं परमात्मानमेवाभिदधति । अतोऽहमिति शब्दः स्वात्मप्रकारिणं परमात्मानमेवाचष्टे । अतः सूत्रकारोऽपि आत्मेति तूपगच्छन्ति ग्राहयन्ति चेति वदति सर्वस्यात्मत्वोपगमः, सर्वशब्दग्राह्यत्वञ्च । तच्च सर्वनामरूपयोः शब्दत्वार्थत्वयोर्ब्रह्मानुप्रवेशकृतत्वात् । वाक्यकारेण च आत्मेत्येव गृह्णीयात् । सर्वस्य तन्निष्पत्तेरिति सूत्रेणाहंग्रहणोपासनमुक्तम् । कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्विशिष्टः परमात्मैवातः सर्वस्य चिदचिदात्मकप्रपञ्चस्य तेन परमात्मना

रुद्रसंवादे ब्रह्मा रुद्रं प्रत्याह—

"तवान्तरात्मा मम च ये चान्ये देहसंज्ञिताः"

इति रुद्रस्य ब्रह्मणश्चान्येषां च देहिनां परमेश्वरो नारायणो अन्तरात्मतयाऽवस्थित इति । तथा तत्रैव—

विष्णुरात्मा भगवतो भवस्यामिततेजसः ।
तस्माद्धनुर्ज्यासंस्पर्शं स विषेहे महेश्वरः ।। इति ।

तत्रैव—

इमौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ ।
तदादर्शितपन्थानौ सृष्टिसंहारकारकौ ।। इति ।

अन्तरात्मतयाऽवस्थितनारायणदर्शितपथौ ब्रह्मरुद्रौ सृष्टिसंहारकार्यकरावित्यर्थः । निमित्तोपादानयोस्तु भेदं वदन्तो वेदबाह्या एव स्युः, "जन्माद्यस्य यतः", "प्रकृतिश्च प्रतिज्ञादृष्टान्ताऽनुपरोधात्" इत्यादि वेदवित्प्रणीतसूत्रविरोधात् । "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्", "ब्रह्म वनं ब्रह्म स वृक्ष आसोद्यतो द्यावापृथिवी निसृतक्षुः", "ब्रह्माध्यतिष्ठद् भुवनानि धारयन्", "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि",

---

निष्पत्तेर्नित्यत्वेऽपि जीवस्य ज्ञानसंकोचकृतावस्थायोगित्वात् कार्यत्वव्यवहार इति । अहमर्थोऽपि आत्मैव परमात्मैव गृह्णीयादुपासीत् । शिवब्रह्मणोः परमात्मात्मकत्वं महाभारतवचनेन स्फुटमवगम्यते । ब्रह्मरुद्रसंवादे ब्रह्मा रुद्रं प्रति आह—"तवान्तरात्मा मम च ये चान्ये देहसंज्ञिताः"इति रुद्रादीनामन्तरात्मा नारायणोऽवस्थित इति । तथा तत्रैव "विष्णुरात्मा भगवतो भवस्यामिततेजसः" इत्यादिना भवात्मत्वं तस्योक्तम् । तत्रैव—

इमौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ ।
तदादर्शितपन्थानौ सृष्टिसंहारकारकौ ।।

इत्यादिना अन्तर्यामितया नारायणप्रदर्शितपथत्वेन सृष्टिसंहारकारकत्वं ब्रह्मशिवयोरुक्तम् । केचिद्वैदिकाः नारायणस्योपादानत्वं शिवस्य निमित्तत्वं जगत्प्रति प्रतिपादयन्ति, ते निमित्तोपादानभेदं वदन्ति । सूत्रश्रुतिविरुद्धाभिधायित्वेन वेदबाह्याः । "जन्माद्यस्य यतः", "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति सूत्राभ्यां सर्वप्रतिज्ञाविरोधः । सदेवेति प्रतिपादितोपादानता तदैक्षतेति । तस्यैव प्रतिपादिता निमित्तता ब्रह्म

"न तस्येशे कश्चन तस्य नाम महद्यशः", "नेह नानाऽस्ति किञ्चन", "सर्वस्य वशी सर्वस्येशानः", "पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्, उतामृतत्वस्येशानः", "नान्यः पन्था अयनाय विद्यते" इत्यादि सर्वश्रुतिगणविरोधाच्च।

इतिहासपुराणेषु च स्थितिप्रलयप्रकरणयोरिदमेव परतत्त्वमित्यवगम्यते। यथा महाभारते—

केन सृष्टमिदं सर्वं जगत्स्थावरजङ्गमम्।
प्रलये च कमभ्येति तन्नो ब्रूहि पितामह!॥

इति पृष्टः "नारायणो जगन्मूर्तिरनन्तात्मा सनातनः" इत्यादि वदति।

ऋषयः पितरो देवा महाभूतानि धातवः।
जङ्गमाजङ्गमञ्चेदं जगन्नारायणोद्भवम्॥ इति च।

---

स वृक्ष आसीदिति ब्रह्मण उपादानता ब्रह्माध्यतिष्ठदिति तस्यैव निमित्ततेति श्रुतिविरोधः। नेह नानास्ति किञ्चनेति सर्वस्य ब्रह्मात्मकत्वेनोपादानताविरोधः। इत्थमेकस्यैव सर्वस्य वशीति निमित्तत्वम्। पुरुष एवेदमिति उपादानत्वम्। निरुक्तञ्च अमृतत्वस्येशान इति मोक्षदातृत्वम्। अन्यस्य निषेध इति सर्वं विरुद्धं स्याज्जगतो निमित्तोपादानभेदे।

सर्वात्मना विरुद्धांशस्तामसत्वादनादरणीयनारायणस्यैव परमकारणत्वे परतत्त्वतायामुपबृंहणवचनानि इतिहासपुराणानि प्रमाणयति। महाभारते चराचरजगत्कारणत्वविषयकप्रश्ने सामान्ये तथा लयविषयके केन सृष्टमिदमिति प्रश्ने "नारायणो जगन्मूर्तिरनन्तात्मा सनातनः" इति प्रतिवचनेन नारायणस्य देवविशेषस्य तन्मूलकचराचरशरीरकत्वान्नरात्मत्वविषयकेण नारायणस्यैव परमकारणत्वं परतत्त्वरूपञ्च सिद्ध्यति। अपि च "ऋषयः पितरो देवाः" इत्यादिना धर्मज्ञानानुष्ठानसम्पन्नानाम् ऋषीणामुपास्यानां पित्रादीनामपि नारायणोपादानत्वेनोक्तार्थः सिद्ध्यति। अत्रार्थे विष्णुपुराणं परमप्रमाणभूतं सात्त्विकं पुराणं प्राच्यादयो न क्वचिदेकदेशभवाः सर्वे, न कतिपये शिष्टाः फलसाधनत्वभ्रमरहितास्तैः सर्वधर्मानुष्ठाने सर्वतत्त्वनिरूपणे च अविगीतत्वेन बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनार्थप्रतिपादकत्वेन परिगृहीतं परमप्रमाणतया स्वीकृतमस्ति। श्रुतवेदान्तस्य मैत्रेयस्याधीताधीयमानशास्त्रस्य अनधीतशाखार्थबुभुत्सया सकलशाखाप्रतिपाद्यार्थप्रमेयजिज्ञासया प्रश्नः

प्राच्योदीच्यदाक्षिणात्यपाश्चात्त्यसर्वशिष्टैः सर्वधर्मसर्वतत्त्वव्यवस्थायामिदमेव पर्याप्तमित्यविगीतपरिगृहीतं वैष्णवञ्च पुराणं "जन्माद्यस्य यतः" इति। जगज्जन्मादिकारणं किमिति प्रश्नपूर्वकं विष्णोः सकाशादुद्भूतमित्यादिना ब्रह्मस्वरूपविशेषप्रतिपादनैकपरतया प्रवृत्तमिति सर्वसम्मतम्। तथात्रैव—

प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि॥
परमात्मा च सर्वेषामाधारः परमेश्वरः।
विष्णुरात्मा च वेदेषु वेदान्तेषु च गीयते॥

इति सर्ववेदवेदान्तेषु सर्वैः शब्दैः परमकारणतयाऽयमेव गीयत इत्यर्थः। यथा सर्वासु श्रुतिषु केवलं परब्रह्मस्वरूपविशेषप्रतिपादनायैव प्रवृत्तो नारायणानुवाकः। तथेदं वैष्णवञ्च पुराणम्—

---

श्रीपराशरं प्रति। "जन्माद्यस्य यतः" इति जन्मादिकारणं ब्रह्मेति ज्ञायते। तत्कारणं किमिति विशेषदेवकारणत्वनिर्णयाय सामान्यप्रश्नः किमिति सामान्यविषयकप्रश्नपूर्वकं विशेषविषयकेणोत्तरेण तत् स्थितिः प्रतिपादिता भवति।

उपक्रमे जगत्कारणं किमिति प्रश्नः। विष्णोः सकाशादुद्भूतमिति प्रतिवचनम्। विशेषविषयकमिति प्रश्नप्रतिवचनाभ्यां विष्णुपुराण एव प्रकृतिर्या मया ख्यातेत्यारभ्य विष्णुरात्मा स वेदेषु वेदान्तेषु च गीयते इत्यन्तग्रन्थेन चोपसंहारात्मकेन नारायणस्य परमकारणत्वं विष्णुशब्दस्य योगशक्त्या व्यापकत्वञ्च रूढिशक्त्या नारायणत्वं शक्यमस्ति। व्यापकत्वावच्छिन्ननारायणपरदेवव्यक्तित्वविशिष्टोऽर्थो विष्णुशब्देनोच्यते। यथा नारायणानुवाकः परब्रह्मविशेषत्वरूपनिर्णयपरस्तथा विष्णुपुराणमपि। तथा हि परब्रह्म किमिति प्रश्नः। "विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम्" इत्यादि प्रतिवचनम्। विष्णुर्नारायणो जगज्जन्मस्थितिसंयमकर्ता, जगदुत्पत्तिकर्ता, स्थूलचिदचिद्विशिष्टावस्थाप्राप्तियोग्यः। स्थितिकर्ता—निरुक्तावस्थाविरोधि निवृत्तिकर्ता। संहारकर्ता—निरुक्तावस्थापरित्यागपूर्वकं सूक्ष्मचिदचिद्विशिष्टावस्थासम्पन्नोऽस्ति। जगच्च जगच्छरीरकः पराणां ब्रह्मादीनां परः श्रेष्ठः।

अत्रायं निष्कर्षः—विष्णोः सकाशात् काशः प्रकाशः सङ्कल्पस्तेन सहितादिति विष्णुशब्देन परदेवतायाः पारमार्थ्यमभिप्रेतम्। देवतापारमार्थ्यज्ञानं यथावद् वेत्स्यते

सोऽहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत् ।
बभूव भूयश्च यथा महाभाग भविष्यति ॥
यन्मयं यज्जगद्ब्रह्मन् यतश्चैतच्चराचरम् ।
लीनमासीद्यथा यत्र लयमेष्यति यत्र च ॥

इति परब्रह्म किमिति प्रक्रम्य—

विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम् ।
स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः ॥
परः पराणां परमः परमात्मात्मसंस्थितः ।
रूपवर्णादिनिर्देशविशेषणविवर्जितः ॥
अपक्षयविनाशाभ्यां परिणामर्धिजन्मभिः ।
वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम् ॥
सर्वत्रासौ समस्तञ्च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥

---

भवानिति। देववरप्रदानेन पराशरस्य प्राप्तमस्ति तत्रेदमाख्यानम्। शक्तिनिधन-सम्बन्धिवशिष्ठशोककृतविविधशरीरत्यागप्रयोगविषयकं प्रमाणम्। स नारायण-स्वरूपतया देशकालवस्तुपरिच्छेदरहितः। रूपं जातिः, 'जातिगुणौ च रूपिणां रूपे' इति वचनात्। वर्णो गुणः, आदिपदेन क्रियाद्रव्यम्। सर्वैर्विवर्जितो परिच्छिन्नतया रहितोऽर्थः, इमे धर्माः परिच्छिन्नाः—आब्रह्मस्तम्बनिष्ठाः। ब्रह्मशरीरनिष्ठा न स्वरूपनिष्ठा इति भावः। अथ च स देवः जन्मास्तित्वापक्षयपरिणामविनाशर्धिषड्विकारशून्यः, केवलं सदास्तीति वक्तुं शक्यः। वासुदेवनाम्नाऽपि नारायणस्य देशापरिच्छिन्नत्वमायाति। सर्वं चासौ समस्तं च वसतीति अत्रासौ वासुः, स चासौ देव इति नामव्युत्पत्तिः। तस्य त्रिविधापरिच्छेदं "तद्ब्रह्म परमं नित्यमजमक्षयमव्ययम्" इति वचनेन स्फुटीकृतम्। देवस्य निर्गुणत्वं हेयप्राकृतगुणराहित्येन पुराणं वक्ति। तेन निर्गुणपदं श्रुतिगतमुप-बृंहितम्। तत्तत्त्वं व्यक्तम्, महदादि अव्यक्तम्, प्रकृतिस्तद्वत् तन्नामरूपनिर्वहणकर्तृ।

नारायणस्य परत्वे उपक्रमवचनानि उद्धृत्योपसंहारवचनानि आह—स सर्वभूत-प्रकृतिं विकारान् गुणादिदोषांश्चेति। विकारा महदादयः, गुणाः सत्त्वरजस्तमांसि। आदिपदेन तत्प्रयुक्ता रागादयः। आवरणं ज्ञानसंकोचः सर्वानिमानतीतः स्वरूपतः शून्यः, तेन सर्वं जगदात्मतया व्याप्तम्। अतोऽखिलात्मा पूर्वोक्तविशेषणैर्देवस्य निखिल-

तद्ब्रह्म परमं नित्यमजमक्षयमव्ययम् ।
एकस्वरूपञ्च यदा हेयाभावाच्च निर्मलम् ।।

तदेव सर्वमेवैतद्व्यक्ताव्यक्तस्वरूपवत् ।
तथा पुरुषरूपेण कालरूपेण च स्थितम् ।।

स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः ।
अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद् भुवनान्तराले ।।

समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशोद्धृतभूतवर्गः ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ।।

तेजोबलैश्वर्यादिषु महावबोधः स्ववीर्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ।।

स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः ।
सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ।।

संज्ञायते येन समस्तदोषं शुद्धं परं निर्मलमेकरूपम् ।
संदृश्यते वाप्यधिगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् ।।

---

हेयप्रत्यनीकत्वमुक्तम् । समस्तकल्याणेत्यादिना कल्याणगुणैकतानत्वमुच्यते । स्वशक्तिलेशेत्यादिना अनायासेन सर्वभूतधारकत्वमुक्तम् । 'इच्छागृहीतोरुदेह' इत्यनेन देहस्य कर्माकृतत्वरूपं वैलक्षण्यमुक्तम् । 'तेजोबले' इत्यनेन सर्वगुणाश्रयत्वमुक्तम् । क्लेशादयः परावरेशेनेति पूर्वोक्तदोषानित्यस्य विवरणम्, विलक्षणस्य जगता सामानाधिकरण्यम्, शरीरशरीरिभावेनेत्याह—व्यष्टिसमष्टिरूप इति । उभाभ्यां पदाभ्यां कार्यावस्थजीवशरीरकत्वं कारणावस्थजीवशरीरकत्वञ्च प्रोक्तम् । व्यक्ताव्यक्तरूपत्वन्तु अचिदभिप्रायेण । सर्वेश्वरघटकेनेश्वरपदेनेश्वरातिरिक्तब्रह्मव्यावृत्तिः । अनेन जगच्छरीरकत्वमुपपादितं भवति, तदेकनियाम्यं शरीरमिति स्वरूपात् । सर्वदृक् सर्वेषां विशेषप्रकारेण ज्ञाता ईश्वरान्तरनिषेधपरं परमेश्वरपदम् अस्तदोषमिति दोषराहित्येन प्रकृतिव्यावृत्तिः । शुद्धं कर्मवश्यताशून्यमिति । बद्धव्यावृत्तिर्निर्मलं कर्म सम्बन्धार्हतारहितमिति मुक्तजीवव्यावृत्तिः, एकरूपं समाभ्यधिकरहितमिति नित्यसिद्धव्यावृत्तिः ।

एवंविधं पूर्वोक्तव्यावर्तकधर्मविशिष्टं ब्रह्म येनागमोत्थेन ज्ञानेन शाब्दबोधेन सम्यग्ज्ञायते विषयीक्रियते । येन साक्षात्काररूपेण प्रत्यक्षसमानाकारध्रुवानुस्मृत्या

इति परब्रह्मस्वरूपनिर्णयायैव प्रवृत्तम्। अन्यानि सर्वाणि पुराणान्यन्यपराणि एतदविरोधेनैव नेयानि। अन्यपरत्वञ्च तत्तदारम्भप्रकारैरवगम्यते।

नन्वस्मिन्नपि—

सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम्।
स संज्ञां याति भगवान् एक एव जनार्दनः॥

इति त्रिमूर्तिसाम्यं प्रतीयते। नैतदेवम्—'एक एव जनार्दनः' इति जनार्दनस्यैव ब्रह्मशिवादिकृत्स्नप्रपञ्चतादात्म्यं विधीयते। 'जगच्च सः' इति पूर्वोक्तमेव विवृणोति—

स्रष्टा सृजति आत्मानं विष्णुः पाल्यश्च पाति च।
उपसंह्रियते चान्ते संहर्ता च स्वयं प्रभुः॥

इति स्रष्टृत्वेनावस्थितं ब्रह्माणं सृज्यञ्च संहर्तारं संहार्य्यंञ्च युगपन्निर्दिश्य सर्वस्य विष्णुतादात्म्योपदेशात् सृज्यसंहार्य्यवस्तुनः स्रष्टृसंहर्त्रोर्जनार्दनविभूतित्वेन विशेषो दृश्यते। जनार्दनविष्णुशब्दयोः पर्यायत्वेन ब्रह्मविष्णुशिवात्मिकामिति विभूतिम्, अत एव स्वेच्छया लीलार्थं विभूत्यन्तर्भाव उच्यते। यथेदमनन्तरमेव उच्यते—

---

दृश्यते, प्रत्यक्षविषयीक्रियते। येन परमभक्त्याख्येन भगवदनुभवाभिनिवेशेनाधिगम्यते, अनुभूयते, स्वभावासहिष्णुना भगवदनुभवेन विषयीक्रियते। साक्षात्कृतस्य देवस्यानुभवाभिनिवेशो भवति। उपासको यमनुभवं विना क्षणमपि न सहते। येन ज्ञानेनेति भवति, तज्ज्ञानं अन्यदज्ञानमिति परब्रह्मस्वरूपनिर्णयायैव विष्णुपुराणं प्रवृत्तम्। अन्यानि पुराणानि विशेषविषयकप्रश्नपूर्वकं तत्तदारम्भप्रकारैरन्यपराणि चेत्, विष्णुपुराणप्रोक्तार्थाविरोधेन नेयानि सर्वथा विरुद्धानि तामसत्वाद्धेयानि।

विष्णुद्वारेणैव सृष्टिस्थित्यन्तकरणीमित्यादिवचनेन त्रिमूर्तिसाम्यमायातीति न, जनार्दनेनैव शिवादिप्रपञ्चस्योक्तन्यायेन तादात्म्यं विधीयते। देवस्य जगतः सामानाधिकरण्यं विवृणोति—"स्रष्टा सृजति आत्मानं विष्णुः पाल्यं च पाति च" इत्यादिना। विष्णोः स्रष्ट्रा, सृज्येन, संहर्त्रा, संहार्येण च युगपत् तादात्म्योपदेशात् सृज्य-संहार्यवस्तुनः स्रष्टृसंहर्तृवस्तुनोर्विष्णुविभूतित्वेन विशेषो दृश्यते। ब्रह्मविष्णुशिवात्मिकामित्यत्र विष्णुजनार्दनयोः पर्यायत्वेन जनार्दनस्यैव लीलया, स्वेच्छया विभूतावन्तर्भावः,

पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।
सर्वेन्द्रियान्तःकरणं पुरुषाख्यं हि यज्जगत् ।।
स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः ।
सर्गादिकं ततोऽस्यैव भूतस्थमुपकारकम् ।।

स एव सृज्यः स च सर्गकर्ता स एव पात्यत्ति च पाल्यते च ।
ब्रह्माद्यवस्थाभिरशेषमूर्तिः विष्णुर्वरिष्ठो वरदो वरेण्यः ।। इति ।

अत्र सामानाधिकरण्यनिर्दिष्टं हेयमिश्रप्रपञ्चजगत्तादात्म्यं निरवद्यस्य निर्विकारस्य समस्तगुणात्मकस्य कथमुत्पद्यते ? इत्याशङ्क्य—"स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः" इति स्वयमेवोपपादयति । स एव सर्वेश्वरः परब्रह्मभूतो विष्णुरेव सर्वं जगदिति प्रतिज्ञाय "सर्वभूतात्मा विष्णुरूपो यतोऽव्ययः" इति हेतुरुक्तः । सर्वभूतानामयमात्मा विश्वरूपो यतोऽव्यय इत्यर्थः । वक्षति च—"तत्सर्वं वै हरेस्तनुः" इति ।

एतदुक्तं भवति—अस्याव्ययस्यापि परस्य ब्रह्मणो विष्णोर्विश्वशरीरतया तादात्म्यमविरुद्धमिति । आत्मशरीरयोश्च स्वभावा व्यवस्थिता एव । एवम्भूतस्य सर्वेश्वरस्य विष्णोः प्रपञ्चान्तर्भूतनियाम्यकोटिनिविष्टब्रह्मादिदेवतिर्यङ्मनुष्येषु तत्तत्समाश्रणीयत्वाय स्वेच्छावतारः पूर्वोक्तः, तदेतद्

---

ब्रह्मशिवादिप्रपञ्चस्य विष्णुना सामानाधिकरण्यं विष्णुविभूतित्वेन, तत्रैवोच्यते—पृथिव्यापस्तथा तेज इत्यादि । स एव जनार्दन एवेति भूतस्थं सर्गादिकमस्यैवोपकारकम् । स एव सृज्य इत्यादिना ग्रन्थेन सृज्यत्वादिना सृज्यादीनां विष्णुविभूतित्वेन समानाधिकरणेन निर्देशः । दोषहीनस्य देवस्य सदोषप्रपञ्चेन तादात्म्यं कथमिति शङ्कायां देवस्य प्रपञ्चात्मकत्वेन प्रपञ्चस्य शिवादेर्विभूतित्वेन स एव सर्वभूतानामात्मेति स्वयमुत्पादयति सामानाधिकरण्यम्, तत्सर्वं वै हरेस्तनुरित्यनेन ।

पूर्वमव्ययस्य परमात्मनः प्रपञ्चेन सदोषेण तादात्म्योपदेशात् समाधानं कृतम् । तत्राव्ययपदोपादानेन कथमापत्तिनिरास इति सन्देहे आह—एतदुक्तं भवतीति । अव्ययस्य निर्विकारस्यात्मत्वेन विश्वस्य शरीरत्वेन तादात्म्यं सामानाधिकरण्यम् । शरीरात्मनोः स्वभावा व्यवस्थिताः, न सङ्क्रमप्रसङ्गः । भूतस्थं सर्गादिकमुपकारकमित्यस्यायमर्थः—सर्वप्राणिगतसर्गादिकमस्यैव विष्णोर्देवोपकारकम्, लीलारुचिनिष्पा-

ब्रह्मादीनां भावनात्रयान्वयेन कर्मवश्यत्वम् । भगवतः परब्रह्मभूतस्य वासुदेवस्य निखिलजगदुपकाराय स्वेच्छया स्वेनैव रूपेण देवादिष्ववतार इति च षष्ठेंऽशे शुभाश्रयप्रकरणे सुव्यक्तमुक्तम् । अस्य देवादिरूपेणावतारेष्वपि न प्राकृतो देह इति महाभारते "न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः" इति प्रतिपादितम् । श्रुतिश्च "अजायमानो बहुधा विजायते तस्य धीराः परिजानन्ति योनिम्" इति । कर्मवश्यानां ब्रह्मादीनामनिच्छतामपि तत्तत्कर्मानुगुणप्रकृतिपरिणामरूपभूतसङ्घसंस्थानविशेषदेवादिशरीरप्रवेशरूपं जन्मावर्जनीयम् । अयं तु सर्वेश्वरः सत्यसङ्कल्पो भगवानेवम्भूतशुभेतरजन्मानुकुर्वन्नपि स्वेच्छया स्वेनैव निरतिशयकल्याणरूपेण देवादिषु जगदुपकाराय बहुधा जायते ।

तस्यैतस्य शुभेतरजन्माकुर्वतोऽपि स्वकल्याणगुणानन्तत्वेन बहुधा योनिम्, बहुविधजन्म धीरा धीमतामग्रेसरा जानन्तीत्यर्थः । तदेतन्निखिलजगन्निमित्तोपादानभूतात् "जन्माद्यस्य यतः", "प्रकृतिश्च प्रतिज्ञा-

---

दकत्वात् । इत्थं शुद्धोऽपि नारायणः स्वजातप्रपञ्चकोटिप्रविष्टब्रह्मादिदेवतिर्यङ्मनुष्येषु ब्रह्मादिमनुष्यान्तप्राणिसमाश्रयणीयत्वाय स्वेच्छयावतरति । तेन ब्रह्मविष्णुरुद्राः प्रसूयन्त इति विष्णुजन्यत्वकृतापत्तिनिरासः । ब्रह्मरुद्रादीनां स्वेच्छावतारो न शङ्क्यः, "हिरण्यगर्भो भगवान्" इत्यारभ्य "अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः" इत्यन्तेन वचनेन ब्रह्मेन्द्रादीनां कर्मवश्यत्वोक्तेः । "समस्ताः शक्तयश्चैताः" इत्यारभ्य "जगतामुपकाराय न सा कर्मनिमित्तजा" इत्यन्तेन विष्णुजन्मनः कर्मवश्यत्वाभावात्, इत्याह—षष्ठेंशे सुव्यक्तमुक्तमिति । देवस्य नारायणस्य देहस्य प्राकृतत्वाभावे प्रमाणं महाभारतम् । तदाह—"न भूतसंघसंस्थानो देहोऽस्य परमात्मनः" इति । "अजायमानो बहुधा विजायते" इति श्रुतिरपि कर्मवश्यत्वाभावे प्रमाणम् । 'बहुधा विजायते' इत्यनेनापाततः कर्मवश्यत्वप्रतीतिनिरासाय उच्यते—कर्मवश्यानां ब्रह्मादीनां जन्मानिच्छतामपि तत्तत्कर्मानुगुणप्रकृतिपरिणामभूतसंघसंस्थानदेवादिशरीरानुप्रवेशोऽवर्जनीयः । परमेश्वरस्तु शुभेतरजन्माकुर्वन्नपि अजायमानोऽपि बहुधा विजायते । स्वेच्छया स्वेनैव कल्याणरूपेण देवादिषु जगदुपकाराय बहुधा जायते । कर्मवश्यानां जन्महेतुः, कर्मफलं तदनुभवः, वपुः प्राकृतम् । विष्णोर्जन्महेतुः स्वेच्छा, फलं जगदुपकारः, शरीरमप्राकृतम् । तस्य देवस्य यानि जन्मकल्याणगुणत्वेन दिव्यं कर्माकृतं धीरा धीमतामग्रेसराः पश्यन्ति ।

दृष्टान्तानुपरोधात्" इत्यादि सूत्रैः प्रतिपादितात् परस्माद्ब्रह्मणः परमपुरुषादन्यस्य कस्यचित्परत्वं "परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः" इत्याशङ्क्य "सामान्यात्तु", "बुद्ध्यर्थः पादवत्", "स्थानविशेषात् प्रकाशादिवत्", "उपपत्तेश्च", "तथान्यप्रतिषेधात्", "अनेन सर्वगतत्वमायामशब्दादिभ्यः" इति सूत्रकारः स्वयमेव निराकरोति। मानवे च शास्त्रे—

प्रादुरासीत्तमोनुदः सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासु वीर्यमपासृजत्॥

तस्मिन्यज्ञे स्वयं ब्रह्मा इति ब्रह्मणो जन्मश्रवणात् तस्य क्षेत्रज्ञत्वमेवावगम्यते। तथा च स्रष्टुः परमपुरुषस्य तद्विसृष्टस्य च ब्रह्मणः अयनं तस्य, ताः पूर्वं तेन नारायणः स्मृतः, तद्विसृष्टश्च पुरुषो लोके ब्रह्मेति कीर्त्यत इति नामनिर्देशाच्च। तथा च वैष्णवे पुराणे हिरण्यगर्भादीनां भावनानामानुष्ठेयविषयकस्संस्कारः। सा त्रिविधा ब्रह्मभावनोपासनादृढसंस्कारः, ब्रह्मशब्दस्य ज्ञानपरत्वात्। सा सनकादिषु कर्म-

---

वेदविरुद्धोक्तिस्त्रिधा—प्रकृतिरुपादानम्, रुद्रो निमित्तकारणम्, नारायणस्योपादानकारणत्वे साधिते निमित्तकारणं रुद्रः। नारायणो हि उपादानम्। इयं विरुद्धोक्तिरवतरति—निमित्तोपादानयोरेकत्व उपपादिते तस्या निरासेऽपि मुक्तिकारणमन्यत्, मुक्तिप्राप्यमन्यत्। तस्या निराकरणं "परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः" इति सूत्रेण। कारणादन्यस्य प्राप्यत्वमाशङ्क्य "सामान्यात्तु", "बुद्ध्यर्थः पादवत्" इत्यारभ्य "अनेन सर्वगतत्वमायामशब्दादिभ्यः" इत्यन्तैः सूत्रैः सूत्रकारेणैव निराक्रियते। मानवे शास्त्रे "सिसृक्षुर्विविधाः प्रजाः" इत्यारभ्य "तस्मिन्जज्ञे स्वयं ब्रह्मा" इति प्रतिपादितम्। तत्र ब्रह्मणः सृज्यत्वश्रवणात् स्रष्टृत्वं न सम्भवेदिति तस्य क्षेत्रज्ञत्वमवधार्यते। अग्रे च स्रष्टुः परमपुरुषस्येत्यादिना अपामाश्रयत्वेन अपारत्वं न, नार-आय-अयनमस्येति योगेन नारायणसंज्ञावधारणात्, तत्सृष्टत्वे नानाश्रयवीर्यजातत्वात्। तत्सृष्टस्य ब्रह्मेति संज्ञावधारणात्तद् ब्रह्मण एव सृज्यत्वं नारायणस्य स्रष्टृत्वं निश्चीयते। अपि च विष्णुपुराणेनापि मानवोक्तार्थो दृढीक्रियते। तथा हि—

त्रिविधा भावना भूप विश्वमेतन्निबोधताम्।
कर्माख्या ब्रह्मसंज्ञा च तथा चैवोभयात्मिका॥

भावना, देवादिषु तेषां वैदिककर्मपरत्वात्। कर्मब्रह्मोभयभावना हिरण्यगर्भस्य, तस्य वैदिककर्मोपासनात्मकज्ञानोभयपरायणत्वात्। भावनात्रयान्वयादशुद्धत्वेन शुभाश्रयत्वानर्हतोपपादनात् क्षेत्रज्ञत्वं निश्चीयते।

यदपि कैश्चिदुक्तम्—विध्यर्थवादमन्त्ररूपस्य वेदस्य कार्याभिधायित्वेनैव प्रामाण्यं वर्णनीयम्, व्यवहारादन्यत्र शब्दस्य बोधकत्वशक्त्यवधारणासम्भवात्, व्यवहारस्य च कार्यबुद्धिमूलकत्वात्। कार्यरूप एव शब्दार्थः। न परिनिष्पन्ने वस्तुनि शब्दः प्रमाणमिति। अत्रोच्यते—प्रवर्तकवाक्यव्यवहार एव शब्दानामर्थबोधकत्वशक्त्यवधारणं कर्तव्यमिति। किमियं राजाज्ञा? सिद्धवस्तुषु शब्दस्य बोधकत्वशक्तिग्रहणमत्यन्तसुकरम्। तथा हि केनचिद्धस्तचेष्टादिना अपवरके दण्डस्थित इति देवदत्ताय ज्ञापयेति प्रेषितः कश्चित् तद्ज्ञापने प्रवृत्तोऽपवरके दण्डः स्थित इति शब्दं प्रयुङ्क्ते। मूकवद् हस्तचेष्टामिमां जानन् पार्श्वस्थोऽन्यः प्रागव्युत्पन्नोऽपि एतस्यार्थस्य बोधनाय अपवरके 'दण्डः स्थितः' इति

---

इति वचनेन वैष्णवेन भावनात्रयान्वयादशुद्धत्वेन हिरण्यगर्भादीनां न शुभाश्रयतार्हता। ब्रह्मभावनानां ब्रह्मविषयकोपासनाय यत्नः। स च सनकसनन्दनादीनाम्। कर्मविषयकभावना कर्मणि विधेये यत्नः। स च देवादीनां कर्मभावना, जगत्सृष्टिनिमित्तकपुण्यलाभाय कर्मभावना। कदाचिन्मुक्तये ब्रह्मोपासना भावनेति। हिरण्यगर्भशिवयोरिति न तेषामशुभाश्रयतार्हतेति भावः।

एतावता प्रबन्धेन स्वमतप्रमाणोपन्यासपूर्वकं परमतनिरासः श्रुतितदुपबृंहणाभ्यां कृतस्तेन प्रथमश्लोके 'विष्णवे' इति पदं व्याख्यातम्। तत्र विष्णौ शक्तिर्न सम्भवति, सिद्धे व्युत्पत्त्यभावादिति मतं निरस्यन् तन्मतं पूर्वपक्षतयोपन्यस्यति। यत्तु कैश्चित् प्राभाकरैरुक्तम्—सर्वस्य विधिमन्त्रार्थवादरूपस्य शब्दस्य कार्याभिधायित्वेन प्रामाण्यम्। वायव्यं पशुमालभेदिति विधेर्वायुदेवताकपशुद्रव्यकगयाः कार्यतया प्रतीयते। तत्रार्थवादस्य "वायुर्वै क्षेपिष्ठा देवता" इत्यादेर्विधेयस्तावकत्वेन कार्यपरत्वम्, मन्त्रस्य प्रयोगसमवेतार्थस्मारकत्वेन कार्यस्मारकत्वेन कार्यपरत्वम्, व्यवहारः प्रवृत्तिर्गामानय इति प्रयोजकवृद्धप्रयुक्तवाक्यश्रवणानन्तरभाविनी प्रयोज्यवृद्धस्य प्रवृत्तिः। ततोऽन्यत्र सिद्धपरवाक्येन न बोधः। तत्र बोधकत्वशक्त्यवधारणाभावात्। प्रवृत्तिः कार्यबुद्धिमूला भवति। कार्यबुद्धिश्च कार्यबोधकवाक्यात्स्यादिति कार्यबोधकत्वमेव वाक्यस्य। प्रवृत्तिजनकज्ञानानुत्पादकत्वान्न सिद्धवाक्याद्बोधः। पूर्ववाक्यस्य सामान्यतः कार्यमर्थः, तस्मिन्निश्चिते

शब्दस्य प्रयोगदर्शनादस्यार्थस्यायं शब्दो बोधक इति जानातीति, किमत्र दुष्करम् ? तथा बालस्तातोऽयम्, इयं माता, अयं मातुलोऽयं मनुष्योऽयं मृगश्चन्द्रोऽयमयं च सर्प इति मातापितृप्रभृतिभिश्शब्दैः शनैः शनैरङ्गुलिनिर्देशेन तत्र तत्र बहुशः शिक्षितस्तैरेव शब्दैस्तेष्वर्थेषु स्वात्मनश्च बुद्धयुत्पत्तिं दृष्ट्वा तेष्वर्थेषु तेषां शब्दानाम् अङ्गुलिनिर्देश-पूर्वकप्रयोगैः सम्बन्धान्तराभावात् सङ्केतपितृपुरुषाज्ञानाच्च बोधकत्व-निबन्धन इति क्रमेण निश्चित्य पुनरप्यस्य शब्दस्यायमर्थ इति पूर्ववृद्धैः शिक्षितः सर्वशब्दानामिममर्थमवगम्य स्वयमपि सर्वं वाक्यजातं प्रयुङ्क्ते।

एवमेव सर्वपदानां स्वार्थाभिधायित्वम्, संघातविशेषाणाञ्च यथावस्थितं संसर्गविशेषवाचित्वञ्च जानातीति कार्यार्थ एव व्युत्पत्तिरित्यादि निर्बन्धो निर्निबन्धनः। अतः परिनिष्पन्ने वस्तुनि शब्दस्य बोधकत्वशक्त्यव-धारणात् सर्वाणि वेदान्तवाक्यानि सकलजगत्कारणं सर्वकल्याणगुणा-

---

आवापोद्वापभेदेन गामानयेत्यत्राश्वस्यावापे गोरुद्वापेऽनुवृत्तस्यानयेत्यस्य कार्यत्वविशिष्टा-नयनमर्थं व्यावृत्तस्य गोपदस्य गोरूपार्थं निश्चिनोति। प्रातिस्विकव्युत्पत्तिर्भवति, विभक्त्यर्थव्युत्पत्तिश्च। "पुत्रस्ते जातो रज्जुरियं न सर्प" इति वाक्ये हर्षहेतुवाचित्व-भयनिवृत्तिहेतुवाचित्वावगमेऽपि हेतुविशेषनिर्धारणायोगान्न तत्र शुद्धार्थविषया व्युत्पत्तिः। अस्य शब्दस्यायमर्थ इति व्युत्पत्तिश्च न प्रथमं सम्भवति, कतिपयशब्दाना-मेव साम्यात्। सिद्धे व्युत्पत्तिराहित्यात् कथं ब्रह्मणि वासुदेवशब्दव्युत्पत्तिकृतो हि शक्तिग्रहः, परतत्त्वबोधश्च। क्वचित्सिद्धपदाद्बोधस्तु कार्यबोधकपदसमभिव्याहारेण।

अत्रोच्यते—प्रवृत्तिप्रयोजकवाक्य एव शक्तिग्रह इति न राजाज्ञा। सिद्धार्थबोधक-वाक्येऽपि शक्त्यवधारणमस्ति। तथा हि कोऽसौ दण्डोऽस्ति, इत्यर्थमेकेन मौनिना हस्त-चेष्टादिना द्वितीयो हस्तचेष्टासंकेताभिज्ञो बोधितः। तेन द्वितीयेन कोणे दण्डोऽस्ति इत्यर्थं दण्डः क्वास्तीति जिज्ञासुरेतदर्थज्ञानाय द्वितीयस्य प्रथमपार्श्वे प्रेषयिता दण्डार्थी कोणे दण्डोऽस्ति इति शब्दप्रयोगपूर्वकं बोधितस्तृतीयः। तदा चतुर्थः पूर्वमव्युत्पन्नो हस्तचेष्टाभिज्ञः प्रथमेन चेष्टादिना कोणे दण्डोऽस्ति इत्यर्थो द्वितीयोच्चरितस्य कोणे दण्डाऽस्तीति शब्दस्यार्थः, इति सिद्धदण्डे निरुक्तशब्दस्य शक्तिं गृह्णाति। अथ द्वितीयः सिद्धवस्तुशक्तिग्रहप्रकारः। बालः शिशुरथवा शक्तिज्ञानरहितः केनचिद्बोधयित्रा अयं तातः, इयं माता, अयं मातुल इति तातप्रभृतिभिः शब्दैः शनैः शनैरङ्गुलिनिर्देशेन

करमुक्तलक्षणं ब्रह्म बोधयन्त्येव। अपि च कार्यार्थ एव व्युत्पत्तिरस्तु। वेदान्तवाक्यान्युपासनविषयकार्याधिकृतविशेषणभूतफलत्वेन दुःखासम्भिन्नदेशविशेषरूपसर्गादिवद् अतिरात्रसत्रप्रतिष्ठावदपवोरणशतयातनासाध्यसाधनभाववच्च कार्योपयोगितयैव सर्वं बोधयन्ति। तथा हि "ब्रह्मविदाप्नोति परम्" इत्यनेन ब्रह्मोपासनविषयकार्याधिकृतविशेषणभूतफलत्वेन ब्रह्मप्राप्तिः श्रूयते। "परप्राप्तिकामो ब्रह्म विद्यात्" इत्यत्र प्राप्यतया प्रतीयमानं ब्रह्मस्वरूपम्, तद्विशेषणञ्च। सर्वं कार्योपयोगितयैव सिद्धं भवति। तदन्तर्गतमेव जगत्स्रष्टृत्वम्, संहर्तृत्वमाधारत्वमन्तरात्मत्वम्, इत्याद्युक्तमनुक्तञ्च, सर्वमिति न किञ्चिदनुपपन्नम्। एवञ्च सति, मन्त्रार्थवादगता ह्यविरुद्धा अपूर्वाश्चार्थाः सर्वे विधिशेषतयैव सिद्धा भवन्ति। यथोक्तं द्रविणभाष्ये—"ऋणं हि वै जायते" इति श्रुतेरित्युपक्रम्य यद्यप्यवदानस्तुतिपरं वाक्यम्, तथापि नासतां स्तुतिरुपपद्यत इति।

---

प्रत्यक्षतया तातादिरर्थ इति बहुशः शिक्षितः। तैरेव तातादिशब्दैः तेषु तातादिष्वर्थेषु स्वात्मनश्च बुद्धयुत्पत्तिमवलोक्य तेष्वर्थेषु तेषां तातादिशब्दानामङ्गुलिनिर्देशपूर्वकं प्रयोगः शब्दस्यार्थेन बोधकत्वान्यसम्बन्धाभावात् सङ्केतयितृपुरुषाज्ञानाच्च बोधकत्वनिबन्धन इति क्रमेण निश्चित्य शब्दस्यार्थेन बोध्यबोधकभावसम्बन्धं निश्चित्य सर्वशब्दानामर्थमवगम्य स्वयमपि सर्ववाक्यजातं प्रयुङ्क्ते।

एवमेव सर्वेषां लौकिकवैदिकवाक्यानां यथावस्थितसंसर्गविशेषवाचित्वम्, कार्याभिधायिवाक्यानां कार्याभिधायित्वम्, सिद्धाभिधायिनां सिद्धाभिधायित्वम्, न सर्वेषां कार्याभिधायित्वमेवेति। अयं निर्बन्धः कार्याभिधायित्वमेव सर्वेषां वाक्यानाम् इत्याकारको हठो निर्निबन्धो निर्मूलः। अतः सिद्धव्युत्पत्तिसत्त्वाद् वेदान्तवाक्यानि कल्याणगुणाकरत्वादिविशिष्टं ब्रह्म बोधयन्त्येवेति। सिद्धेऽर्थे व्युत्पत्तिं प्रसाध्य वेदान्तवाक्यानां प्रामाण्यमुपपादितम्। अथ कार्यपरत्वेऽपि तुष्यतु न्यायेन साधयति। अपि च कार्यार्थ एव व्युत्पत्तिरस्तु। वाक्यानां कार्यार्थ एव तात्पर्यमस्तु। वेदान्तवाक्यानि, उपासनारूपे कार्येऽधिकृतः फलस्वामी उपासकः। तद्विशेषणं यत्फलं ब्रह्मरूपानन्दात्मकम्, दुःखासम्भिन्नयागफलस्वर्गातिरात्रसत्रसिद्धप्रतिष्ठावद् अपवोरणफलशतयातनावत् सिद्धम्। साधकमुपासनादि यागादि तस्योपयोगितया कार्यमेव बोधयन्ति। ब्रह्मविदाप्नोति परमित्यत्रोपासनाकार्याधिकृतोपासकविशेषणफलत्वेन ब्रह्मप्राप्तिः श्रूयते। यथा ब्रह्मप्राप्तिकामो ब्रह्म विद्यादिति, स्वर्गकामो यजेदितिवत्।

एतदुक्तं भवति—सर्वो हि अर्थवादभागो देवताराधनभूतयागादेः साङ्गस्याराध्यदेवतायाश्चानुरूपान् गुणान् सहस्रशो वदन् सहस्रशः कर्मणि प्राशस्त्यबुद्धिमुत्पादयति। तेषामसद्भावे प्राशस्त्यबुद्धिरेव न स्यादिति कर्मणि प्राशस्त्यबुद्ध्यर्थं गुणसद्भावमेव बोधयतीति। अनयैव दिशा सर्वे मन्त्रार्थवादावगता ह्यर्थाः सिद्धाः। अपि च कार्यवाक्यार्थवादिभिः किमिदं कार्यत्वं नामेति वक्तव्यम्। कृतिभावभाविता कृत्युद्देश्यत इति चेत्, किमिदं कृत्युद्देश्यत्वम्? यदधिकृत्य कृतिर्वर्तते, तत्कृत्युद्देश्यत्वमिति चेत्, पुरुषव्यापाररूपायाः कृतेः कोऽयम् अधिकारो नाम? यत्प्राप्तीच्छया कृतिमुत्पादयति पुरुषः। तत्कृत्युद्देश्यत्वमिति चेत्, हन्त! तर्हि इष्टत्वमेव कृत्युद्देश्यत्वम्।

---

अत्र श्रुतौ प्राप्यतया निर्दिष्टं ब्रह्म तद्विशेषणं सत्यसङ्कल्पत्वादि अन्तरामत्वपर्यन्तमनुक्तमपि धर्मस्तु यागे दिव्यदेवतायजमानवत् कार्योपयोगितयोपासनाकार्योपयोगितया कार्यमवसेयम्। तेन तेषामपि शब्दार्थत्वमिति भावः। क्रिया साधनान्वितौ विशेषरूपापन्ना भवति, प्रवृत्त्युपयोगिनो चेति। एवं सर्वविधिषु मन्त्रार्थवादगता अविरुद्धाः प्रमाणान्तराप्राप्ता अर्था विधेयाङ्गतया सिद्धा भवन्ति, शब्दार्था भवन्तीत्यर्थः। विधिशेषत्वेनार्थवादस्यापि प्रामाण्ये द्रविडाचार्यभाष्यमुद्धरति। ऋणं हि वै जायत इति श्रुतेरित्युपक्रम्य यद्यप्यवदानस्तुतिपरं वाक्यम्, तथापि असतोऽर्थस्य स्तवनं न सम्भवति। तथासति असत्यत्वनिर्णयेन स्तुतिकामभूताया यागप्रवृत्तेरनुपपत्तेः। अतः सर्वो हि अर्थवादभागो देवताराधनरूपयागादेर्द्रव्यदेवतादेर्वा स्तवकान् गुणान् वर्णयन् कर्मणि प्राशस्त्यबुद्धिं जनयति। प्राशस्त्यबुद्ध्यर्थं गुणसद्भावमेव वर्णयति। अनेन न्यायेन सर्वे मन्त्रार्थवादगता गुणा ब्रह्म तद्गुणाः सत्यकामत्वादयः, छागस्य वपाया मेदस इति मन्त्रस्यार्थगताः छागादयः कर्माङ्गतया सिद्धाः सत्या इति। अथ परोक्तं कार्यत्वमनुपपन्नमिति साधयति। कार्यवाक्यार्थवादिभिः कार्यत्वं कृत्युद्देश्यत्वम्। कृतिभावभावित्वरूपं चेदुच्यते—किमिदं कृत्युद्देश्यत्वम्? यदधिकृत्य यत्साध्यतयावलम्ब्य यत्नो भवति, तत्कृत्युद्देश्यमिति चेत्, पुरुषव्यापाररूपायाः कृतेः कोऽयमधिकारः? प्रयोजनसाधनत्वेन स्वकीयत्वबुद्धिः। स्वकीयत्वमुत्पादयति -बुद्धिरधिकारः पुरुषव्यापारकृतेर्न सम्भवतीति। अकामेन कृतिमत्पुरुषेष्टत्वं तदिति चेत्, इष्टत्वमेव कार्यत्वमिति तद् ब्रह्मैव।

अथैवं मनुषे इष्टस्यैव रूपद्वयमस्ति। इच्छाविषयतया स्थितिः, पुरुषप्रेरकत्वञ्च। तत्र प्रेरकत्वाकारः कृत्युद्देश्यत्वमिति। सोऽयं स्वपक्षाभिनिवेशकारितो वृथाश्रमः। तथा हि इच्छाविषयतया प्रतीतस्य प्रयत्नोत्पत्तिमन्तरेणासिद्धिरेव प्रेरकत्वम्, तत एव प्रवृत्तेः। इच्छायां जातायामिष्टस्य स्वप्रयत्नोत्पत्तिमन्तरेणासिद्धिः प्रतीयते चेत्, ततश्चिकीर्षा जायते। ततः प्रवर्तते पुरुष इति तत्त्वविदां प्रक्रिया, तस्मादिष्टस्य कृत्यधीनात्मलाभत्वारितरेकि कृत्युद्देश्यत्वं नाम किमपि न दृश्यते।

अथोच्यते—इष्टताहेतुश्च पुरुषानुकूलता। तत्पुरुषानुकूलत्वं कृत्युद्देश्यत्वमिति चेन्मैवम्। पुरुषानुकूलं सुखमपर्यायम्, तदनर्थान्तरं सुखव्यतिरिक्तस्य कस्यापि पुरुषानुकूलत्वं न सम्भवति। ननु च दुःख निवृत्तेरपि सुखव्यतिरिक्तायाः पुरुषानुकूलता दृष्टा। नैतत्, आत्मानुकूलं सुखम्, आत्मप्रतिकूलं दुःखं हि इति सुखदुःखयोर्विवेकः। तत्रात्मानुकूलं सुखमिष्टं भवति। तत्प्रतिकूलं दुःखञ्चानिष्टम्। अतो दुःखसंयोगसह्यतया तन्निवृत्तिरपि इष्टा भवति। तत एवेष्टतासाम्यादनुकूलताभ्रमः।

---

अथैवं मनुषे इष्टम्प्रेरकत्वम्, इच्छाविषयतया स्थितिश्चेति रूपद्वयविशिष्टम्। तत्र प्रेरकत्वं कृत्युद्देश्यत्वमिति चेति। सोऽयं स्वपक्षाभिनिवेशकृताभ्युपगमः। तथा हि यजमानो हि इष्टस्योपायान्तरेणासिद्धौ स्वप्रयत्नात् तस्यासिद्धौ च न प्रवर्तते। स्वप्रयत्नादेव सिद्धौ प्रवर्तत इति स्वप्रयत्नं विना इष्टस्यासिद्धिः प्रेरकत्वमागतम्। इच्छायां जातायामिष्टस्य स्वप्रयत्नमन्तरेणासिद्धिः प्रतीयते चेत्, ततश्चिकीर्षा जायते। ततः प्रवर्तते चिकीर्षानां कृतीच्छा, तस्मात् कृतिं विना इष्टासिद्धिरूपस्य प्रेरकत्वस्य स्वीकारात्। फलतः कृत्यधीनात्मलाभत्वमेव प्रेरकत्वम्, कृत्युद्देश्यत्वमायातम्।

अथोच्यते—इष्टताहेतुः पुरुषानुकूलता। तदेव कृत्युद्देश्यत्वम्। तत्र सुखपर्यायम्, पुरुषानुकूलत्वम्, क्रियाया अपूर्वस्य च दुःखरूपत्वेन पुरुषानुकूलत्वाभावात्। तदाह—सुखव्यतिरेकस्येति। ननु दुःखनिवृत्तेः पुरुषानुकूलत्वात् कथं तदिति चेत्, आत्मानुकूलं सुखं तत्प्रतिकूलं दुःखमिति। तयोः स्वरूपत्वाद् दुःखस्यानिष्टत्वेन तत्संयोगस्यासह्यतया तन्निवृत्तिर्दुःखसंयोगनिवृत्तिरपीष्टा भवति। इष्टसाम्यादुपचारोऽनुकूलतायाः। तथा हि प्रकृतिबद्धसंसारिणो जीवस्यानुकूलप्रतिकूलसंयोगस्वरूपस्थितयस्तिस्रोऽवस्था भवन्ति। तत्रानुकूलप्रतिकूलसंयोगनिवृत्तिः स्वरूप-

तथा हि प्रकृतिसंसृष्टसंसारिणः पुरुषस्यानुकूलसंयोगः, प्रतिकूलसंयोगः, स्वरूपज्ञानस्थितिरिति च तिस्रोऽवस्थास्तत्र प्रतिकूलसम्बन्धनिवृत्तिः, अनुकूलसम्बन्धनिवृत्तिश्च स्वरूपेणावस्थितिरेव। तस्मात्प्रतिकूलसंयोगे वर्तमाने तन्निवृत्तिरूपा स्वरूपेऽवस्थितिरपीष्टा भवति। तत्रेष्टतासाम्याद-नुकूलताभ्रमः। अतः सुखदुःखरूपत्वादनुकूलताया नियोगस्यानुकूलतां वदन्तं प्रामाणिकाः परिहसन्ति। इष्टस्यार्थविशेषस्य निर्वर्तकतयैव हि नियोगस्य नियोगत्वम्, स्थिरत्वमपूर्वत्वञ्च प्रतीयते। स्वर्गकामो यजेदित्यत्र कार्यस्य क्रियातिरिक्तता स्वर्गकामपदसमभिव्याहारेण स्वर्गसाधनत्वनिश्चयादेव भवति। न च वाच्यं यजेतेत्यत्र प्रथमं नियोगः स्वप्रधानतयैव प्रतीयते। स्वर्गकामपदसमभिव्याहारात् स्वसिद्धये स्वर्गसिद्ध्यनुकूलता च नियोग-स्येति। यजेतेति हि धात्वर्थस्य पुरुषप्रयत्नसाध्यतैव प्रतीयते। स्वर्गकाम-पदसमभिव्याहारादेव धात्वर्थातिरेकिणो नियोगत्वम्, स्थिरत्वमपूर्वत्वञ्चे-

---

स्थितिरेव। तस्मात् प्रतिकूलसंयोगनिवृत्तिरिष्टैव। अनुकूलस्य सुखातिरिक्तस्याभावादेव नियोगस्यानुकूलतां वदन्तं प्राभाकरं परिहसन्ति वैदिकाः। नियोगस्य सुखविशेष-रूपत्वेन पुरुषानुकूलत्वं कृत्युद्देश्यत्वं तृतीयं लक्षणं सम्भवतीत्यतो नियोगस्य सुखविशेष-रूपतां निरसितुमाह—नियोगस्य नियोगत्वं प्रेरकत्वम्, प्रवृत्तिजनकत्वम्। अथ तस्य स्थिरत्वं स्वर्गोत्पत्तिपर्यन्तस्थायित्वम्, प्रमाणान्तरागोचरत्वञ्चापूर्वत्वम्, इष्ट-स्यार्थविशेषस्य जनकतयैव प्रतीयते। यथा स्वर्गकामपदसमभिव्याहारेण कार्यस्य विधेयस्य धात्वर्थक्षणिकक्रियातिरिक्तता प्रतीयते, क्षणिकायाः कालान्तरभाविस्वर्ग-साधनत्वानुपपत्तेः। स्वर्गसाधनत्वानवगतौ किं क्षणिकक्रियाया विधेयत्वनिषेधेन।

न चापूर्वस्य राजवत् स्वतःप्रधानत्वेन प्रतीतौ, अनन्तरं स्वानुष्ठानकर्तुरिष्ट-प्रदोऽपीति वाच्यम्, यथोक्तम्—आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये कुर्वतः स्वर्गादि-कमपि प्रधानं कार्यमेव नः, इत्याह—स्वर्गसिद्ध्यनुकूलताऽपि इत्यन्तेन न च वाच्य-मित्यादिना। तन्न, यजेतेति पदघटकलिङा न स्वतःप्रधानमपूर्वं कार्यमुच्यते राजवदपि तु तेन यागस्य कृतिसाध्यतामात्रं प्रतीयते। अतो नापूर्वस्य स्वतःप्रधानत्वेन विधिः सम्भवति; किन्तु स्वर्गकामपदसमभिव्याहारात् कृतिसाध्यस्य यागस्य स्वर्ग-साधनत्वेऽवगते तदनुपपत्त्याऽपूर्वस्य स्थिरस्य प्रेरकस्य प्रमाणान्तराविषयस्य कल्पना भवति। अतो न सुखविशेषरूपतासिद्धिस्तस्य। स्वतस्सुखं न, सुखसाधनत्वेन

त्यादि ह्यवगम्यते । तच्च स्वर्गसाधनत्वप्रतीतिनिबन्धनम् । समभिव्याहृत-स्वर्गकामपदार्थान्वययोग्यं स्वर्गसाधनमेव कार्यं लिङादयोऽभिदधति इति हि लोकव्युत्पत्तिरपि तिरस्कृता ।

एतदुक्तं भवति—समभिव्याहृतपदान्तरवाच्यार्थान्वययोग्यमेवेतर-पदप्रतिपाद्यमित्यन्विताभिधायिपदसङ्घातरूपवाक्यश्रवणसमनन्तरमेव प्रतीयते । तच्च स्वर्गसाधनरूपम्, अतः क्रियावदनन्यार्थतापि विरोधादेव परित्यक्तेति । अत एव 'गङ्गायां घोषः' इत्यादौ घोषं प्रति वास-योग्यार्थोपस्थापनपरत्वं गङ्गापदस्याश्रीयते । प्रथमं गङ्गापदेन गङ्गार्थः स्मृत इति गङ्गापदार्थस्य पेयत्वं न वाक्यार्थान्वयि भवति । एवमत्रापि यजेतेत्येतावान् रवमात्रश्रवणे कार्यमनन्यार्थं स्मृतमिति वाक्यार्थान्वय-समये कार्यानन्यार्थता नावतिष्ठते । कार्याभिधायिपदश्रवणवेलायां प्रथमं कार्यमनन्यार्थं प्रतीतमित्येतदपि न सङ्गच्छते । व्युत्पत्तिकाले

---

किञ्चित्सुखं भवति, अतः समभिव्याहृतस्वर्गकामपदार्थान्वययोग्यं स्वर्गसाधनमेव कार्यम-पूर्वरूपं लिङादयोऽभिदधति हि, लोकव्युत्पत्तिरपि परास्ता, अर्थात् स्वतःप्रधानापूर्वस्य राजवत् लिङ्वाच्यत्वे समभिव्याहृतपदार्थान्वययोग्य एवार्थः शब्दस्येति लोकव्युत्पत्ति-स्तिरस्कृता भवति ।

इतरपदार्थान्वययोगस्यैव पदान्तरप्रतिपाद्यत्वमित्याह—एतदुक्तमिति । समभिव्या-हृतपदान्तरवाच्यार्थान्वययोग्यमेवेतरपदप्रतिपाद्यमिति अन्विताभिधायिपदश्रवण-समनन्तरमेव प्रतीयते । यजेतेत्यत्र लिङा बोध्यमानं कार्यं स्वर्गसाधनत्वविशिष्टम-पूर्वमेव, न क्रियात्मकं यागरूपम्, न वानन्यार्थः, स्वतःप्रधानमपूर्वञ्च, तस्यापि वाच्यत्वे स्वर्गसाधनत्वविरोधात् । अनन्यार्थत्वं स्वातिरिक्तप्रयोजनशून्यत्वम्, इत्याह—क्रियावदित्यादिना । पदान्तरार्थान्वययोग्यस्यैवेतरपदार्थव्युत्पत्तेरेव 'गङ्गायां घोषः' इत्यत्र पूर्वं गङ्गापदार्थः स्मृतोऽपि वाक्यार्थबोधकाले पेयत्वस्य घोषानन्वयात् सोऽर्थः परित्यज्यते । अन्वययोग्यस्तीर उपादीयते । अतः पूर्वमनन्यार्थमपूर्वं प्रतीयमानमपि स्वर्गकामपदसमभिव्याहारात् स्वर्गसाधनत्वान्वयानुपपत्त्या अनन्यार्थत्वं स्वतःप्रधानता-विधुरमेवापूर्वं बोधविषयो भवति । वस्तुतः प्रथमं कार्यमनन्यार्थप्रतीतमित्यपि न । शक्तिग्रहकाले गामानयेत्यत्रानयनक्रियायां दुःखरूपायामिष्टसाधनतयैव कार्यतायाः प्रतीतेः । न हीष्टसाधनताशून्यं किञ्चित् कार्यतया प्रतीयते । अतो नियोगस्य न स्वतः

गवानयनादिक्रियाया दुःखरूपाया इष्टविशेषसाधनतयैव कार्यताप्रतीतेः। अतो नियोगस्य पुरुषानुकूलत्वं सर्वलोकविरुद्धम्, नियोगस्य सुखरूप-पुरुषानुकूलतां वदतः स्वानुभवविरोधश्च। कारीर्या वृष्टिकामो यजेतेत्यादिषु सिद्धेऽविनियोगे वृष्ट्यादिसिद्धिनिमित्तस्य वृष्टिव्यतिरेकेण नियोगस्यानुकूलता नानुभूयते। यद्यप्यस्मिन्जन्मनि वृष्ट्यादिसिद्धेरनियमः, तथाप्यनियमादेव नियोगसिद्धिरवश्याश्रयणीया। तस्मिन्ननुकूलतापर्यायसुखानुभूतिर्न विद्यते। एवमुक्तरीत्या कृतिसाध्येष्टत्वातिरेकि कृत्युद्देश्यत्वं न विद्यते। कृतिं प्रति शेषित्वं कृत्युद्देश्यत्वमिति चेत्, किमिदं शेषित्वं किञ्च शेषत्वमिति वक्तव्यम्, कार्यं प्रति सम्बन्धी शेषः, तत्प्रति सम्बन्धित्वं शेषित्वमिति चेत्, एवं तर्हि कार्यत्वमेव शेषित्वं विचार्यते। परोद्देशेन प्रवृत्तकृतिव्याप्त्यर्हत्वमेव शेषत्वमिति चेत्, कोऽयं परोद्देशो नामेति। अयमेव हि विचार्यते।

उद्देश्यत्वं नामेप्सितसाध्यत्वमिति चेत्, किमीप्सितत्वमिति चेत्, कृतिप्रयोजनत्वमिति चेत्, पुरुषस्य कृत्यारम्भप्रयोजनमेव हि कृति-

---

सुखरूपत्वम्, नियोगस्यानुकूलतां सुखरूपतां वदतः स्वानुभवविरोधश्च। तथा हि कारीर्यां वृष्टिकामो यजेतेत्यत्र नियोगस्य वृष्टिरूपफलातिरिक्ता काचिदनुकूलता नियोगेनानुभूयते। सुखसाधनत्वकृताऽपि सा न, सुखस्वरूपा तु दवीयसी।

न चेह जन्मनि वृष्टिनियमाभावादत्र नियोगो नाङ्गीक्रियते, इति न तदीयसुखस्वरूपतानुभव इति वाच्यम्, वृष्ट्यसिद्धेरपि नियमाभावेन कदाचिद् वृष्टिजनकतया सिद्धनियोगस्यानुकूलतानुभव इति स्थितेः। एवमुक्तप्रकारस्य कार्यत्वस्यासम्भवात् कृतिसाध्येष्टत्वातिरेकि कृत्युद्देश्यत्वं न सिद्ध्यति। कृतिशेषित्वं कृत्युद्देश्यत्वं न। कार्यं प्रति सम्बन्धी शेषः। कार्यतानिरूपकतावच्छेदकधर्मवानुपकारकः। कार्यं प्रति सम्बन्धि तत्प्रति सम्बन्धित्वं शेषित्वम्। उपकारकतानिरूपकतावच्छेदकधर्मवत्वं शेषित्वम्। एवञ्च कार्यमेव तादृशधर्मवत्स्यात्। शेषित्वं कार्यत्वमित्युक्तं भवति। कार्यत्वमेव विचारितम्, विचार्यते च। अथ परोद्देशेन प्रकृतकृतिव्याप्त्यर्हत्वं शेषत्वमिति। कोऽयं परोद्देशो नाम? स एव परो विचारपदम्। तत्रोद्देश्यत्वमपि। ईप्सितसाध्यत्वमिति चेत्, ईप्सितत्वं यदि कृतिप्रयोजनत्वम्, तन्न घटेत, अचेतनायास्तस्याः स्वत इष्टस्य प्रयोजनस्याभावेन पुरुषकृत्यारम्भप्रयोजनस्यैव तत्प्रयोजनत्वेन। स चेच्छाविषयः कृत्यधीनात्म-

**प्रयोजनम् । स चेच्छाविषयः । कृत्यधीनात्मलाभ इति पूर्वोक्तमेव । अयमेव हि सर्वत्र शेषशेषिभावः । परगतातिशयाधानेच्छया उपादेयत्वमेव यस्य स्वरूपम्, स शेषः । परः शेषी । फलोत्पत्तीच्छया यागादेः प्रयत्नस्य चोपादेयत्वम् । यागादिसिद्धीच्छया अन्यत्सर्वमुपादेयम् । एवं गर्भदासादीनामपि पुरुषविशेषातिशयाधानेच्छयोपादेयत्वमेव स्वरूपम् । एवमीश्वरगतातिशयाधानेच्छया उपादेयत्वमेव । चेतनाचेतनात्मकस्य नित्यस्यानित्यस्य च सर्वस्य वस्तुनः स्वरूपमिति । सर्वमीश्वरशेषभूतं सर्वस्य चेश्वरः शेषीति "सर्वस्य वशी सर्वस्येशान.", "पतिं विश्वस्य" इत्याद्युक्तम् । "कृतिसाध्यप्रधानं यत्, तत्कार्यमभिधीयते" इत्ययमर्थः श्रद्दधानेष्वेव शोभते । अपि च स्वर्गकामो यजेदित्यादिषु लकारवाच्यं कर्तृविशेषः, कर्तृविशेषसमर्पणपरायणं स्वर्गकामादिपदानां नियोज्य-**

---

लाभ एव । कृतिसाध्येष्टतालाभ एव पूर्वोक्तं कार्यं निष्पन्नम् । अयमेव शेष-शेषिभावः । सर्वत्र पूर्वोत्तरमीमांसयोः परगतातिशयाधानेच्छयैव यस्योपादेयत्वं स शेषः ।

परगतातिशयाधानस्य यत्रासम्बन्धाभावः, स शेष इति लक्षणे कृते शेषिण्यपि तस्य सत्त्वेनातिव्याप्तिः । परगतातिशयाधानवान् य एवेति तल्लक्षणे असम्भव इत्युभयव्यावर्तकं लक्षणमुक्तवान् । पूर्वभागेऽपि परदर्शपौर्णमासयागगतातिशयाधानेच्छयैव उपादेयत्वमनुयाजप्रयाजादीनाम् । तथा भगवद्गतातिशयाधानेच्छयैव लीलाकृतमुखोल्लासायैव उपादेयत्वं किञ्चित् प्रपञ्चस्य । स्वर्गरूपफलोत्पत्तिरूपातिशयाधानेच्छयैवोपादेयत्वं यागस्य, तदर्थयत्नश्चेति तयोः शेषत्वम् । यागनिष्पत्तिरूपातिशयाधानेच्छया यजमान-देवता-हविरादीनामुपादेयत्वमिति तेषां शेषत्वम् । तत्कृतातिशयभागित्वं शेषित्वम् । अपूर्वे शेषित्वं निरुक्तलक्षणं न घटते, स्वर्गोत्पत्तीच्छयैव अपूर्वस्योपादेयत्वाच्छेषत्वमेव । "कृतिसाध्यं प्रधानं यत् तत्कार्यमभिधीयते" इति प्रधानत्वगर्भं कार्यलक्षणं मीमांसकगोष्ठीगतानामेव, न प्रामाणिकानाम् । गर्भदासा ये गर्भादाजीवनं दासाः, ते गर्भदासाः । तेषामपि स्वामिनामतिशयसुखोत्पत्तिस्तदीच्छयैव संग्राह्यत्वमिति तेषां शेषत्वम् । एवमीश्वरगतातिशयो लीलारसभोगरसात्मकः । तदीच्छयैव नित्यविभूत्योरुपादेयत्वमिति शेषत्वम् । अमुमेवार्थं "सर्वस्य वशी सर्वस्येशानः" इति श्रुतिः परमात्मनः सर्वस्वामित्वबोधिका आमनति । कृतिसाध्यत्वविशिष्टत्वं कार्यत्वमपूर्वस्य न विद्यते यथा, तथा तद्योगि नियोज्यत्वमपि कर्तुं नोपपद्यते । तथा हि प्रथमं नियोज्यपदार्थ उच्यते । कार्येऽपूर्वे स्वकीयत्वबुद्धिमान् नियोज्यः, तत्साधने कर्मणि स्वकार्यत्वबुद्धिमानधिकारी, क्रियानुष्ठाता कर्ता इति तिस्रोऽवस्था यष्टुर्भवन्ति । तत्र "स्वर्गकामो यजेत"

विशेषसमर्पणपरत्वं शब्दानुशासनविरुद्धं केनावगम्यते? साध्यस्वर्गविशिष्टस्य स्वर्गसाधने कर्तृत्वान्वयो न घटत इति चेत्, नियोज्यत्वान्वयोऽपि न घटते, इति हि स्वर्गसाधनत्वनिश्चयः। न तु शास्त्रसिद्धे कर्तृत्वान्वयेऽपि स्वर्गसाधनत्वनिश्चयः क्रियते। यथा 'भोक्तुकामो देवदत्तगृहं गच्छेत्" इत्युक्ते भोजनकामस्य देवदत्तगृहगमने कर्तृत्वश्रवणादेव प्राग् ज्ञातमपि भोजनसाधनत्वं देवदत्तगृहगमनस्यावगम्यते। एवमत्रापि भवतीति न क्रियान्तरं प्रति कर्तृतयाश्रितस्य क्रियान्तरे कर्तृत्वकल्पनं युक्तम्। यजेतेति हि यागकर्तृतया श्रुतस्य बुद्धौ कर्तृत्वकल्पनं क्रियते। बुद्धेः कर्तृत्वकल्पनमेव हि नियोज्यत्वम्। यथोक्तम्—"नियोज्यः स च कार्यः, यः स्वकीयत्वेन बुद्ध्यते" इति। यष्टृत्वानुगुणं तद्बोधृत्वमिति चेत्, 'देवदत्तः पचेत्' इति पाककर्तृतयाश्रितस्य देवदत्तस्य पाकार्थगमनं पाकानुगुणमिति गमने कर्तृत्वकल्पनं न युज्यते।

---

इत्यत्र स्वर्गकामपदेन नियोज्यः समर्प्यत इति प्राभाकराः, तन्न युक्तम्, लकारवाच्यकर्तृसमर्पकत्वात्स्वर्गकामपदस्य नियोज्यपरत्वमनुशासनविरुद्धम्। कर्तृवाचित्वमेव लस्य शब्दानुशासनसिद्धम्।

न च स्वर्गसाधने यागे स्वर्गफलेच्छाविशिष्टस्यान्वयो न घटत इति लकारस्य लक्षणया नियोग्यपरत्वं स्वीक्रियते। नियोग्यस्यापि स्वर्गसाधने यागेऽन्वयस्य तथात्वात्, तस्मान्नियोज्यत्वान्वयाय यागे परम्परया स्वर्गसाधनत्वं निश्चेत्तव्यम्। तदा कर्तृत्वान्वयोऽपि स्वर्गसाधनत्वे निश्चिते स्यात्। इत्थं स्वर्गकामपदस्य लकारस्य च कर्तृसामान्यविशेषसमर्थकत्वाय तथा नियोज्यविशेषसामान्यसमर्पकत्वाय कर्तुर्नियोज्यस्य चान्वयोऽपि कार्यस्य यागस्य स्वर्गसाधनत्वं निश्चेत्तव्यमवशिष्टम्; किन्तु कर्तृत्वमनुशासनसिद्धं नियोज्यत्वविरुद्धमनुशासनेन। यागे स्वर्गसाधनत्वनिश्चये न शब्दप्रयोज्यः। भोक्तुकामो देवदत्तगृहं गच्छेदित्युक्ते भोजनकामस्य कर्तृतया देवदत्तगृहगमने अन्वये अवगते प्रागज्ञातमपि गृहगमने भोजनसाधनत्वमर्थतोऽवगम्यते। तथा कर्तृत्वेन स्वर्गकामस्य यागेऽन्वये सति स्वर्गसाधनत्वं यागे अज्ञातमर्थतोऽवगम्यते। प्राभाकरो नियोज्यस्यान्वयं ब्रुवन् यागकर्तृतयाश्रितोऽर्थः कार्यः स्वकीयबुद्धिकर्त्ता इति मनुते। बुद्धः कर्तृत्वकल्पनमेव नियोज्यत्वम्, यथाह नियोज्यः—"स च कार्यो यः स्वकार्यत्वेन बुध्यते" इति यागे स्वकीयत्वबुद्धिकर्तृत्वं यजमानत्वानुगुणमिति न दोष इति न। देवदत्तः पचेदित्युक्ते पाककर्त्तुर्देवदत्तस्य पाकोपकरणनिमित्तकगमनकर्तृत्वस्यानुगुणत्वे गमनकर्तृत्वं पाककर्त्तुर्न युज्यते।

किञ्च, लिङादेशवाच्यं स्थायिरूपं किमिति अपूर्वमाश्रियते। स्वर्गकामपदसमभिव्याहारानुपपत्तिरिति चेत्, काऽत्रानुपपत्तिः। सिसाधयिषितस्वर्गो हि स्वर्गकामस्तस्य कालान्तरभावि स्वर्गसिद्धौ क्षणभङ्गिनी क्रिया न समर्थेति चेत्, अनाघ्रातवेदसिद्धान्तानामियमनुपपत्तिः। सर्वैः कर्मभिराराधितः परमेश्वरो भगवान्नारायणः तत्तदिष्टं फलं ददातीति वेदविदो वदन्ति। यथाहुर्वेदविदग्रेसरा द्रविडाचार्याः फलसम्बिभत्सया। 'सम्बिभत्स' इत्यत्र न अकारलोपश्चिन्त्यः, वकारोत्तरभकारपूर्वमकारस्यौचित्यात्। व्याचष्टे हि कर्मभिरात्मानमपि प्रीणन्ति। स प्रीतोऽलं फलायेति शास्त्रमर्यादा, इति फलसम्बन्धेच्छया कर्मभिर्यागदानहोमादिभिः त्रिदशादिदेवतामुखेन तत्तदन्तर्यामिरूपेणावस्थितमिन्द्रादिशब्दवाच्यं परमात्मानं भगवन्तं वासुदेवं आराधयिष्यन्ति। स हि कर्मभिराराधितस्तेषामिष्टानि फलानि परमात्मा प्रयच्छतीत्यर्थः। तथा च श्रुतिः—"इष्टापूर्तं बहुधा जातम्, जायमानं विश्वं बिभर्ति भुवनस्य नाभिः" इति। इष्टापूर्तमिति सकलश्रुतिस्मृतिप्रतिपादितकर्मोच्यते। तद्विश्वं बिभर्ति,

---

न केवलमपूर्वस्य प्राधान्यासिद्धिरपि तु साधनतया स्वरूपासिद्धिरपीति उपपादयति। लिङादिवाच्यमपूर्वं स्वर्गकामपदसमभिव्याहारेण प्रतीतस्य स्वर्गसाधनत्वस्य क्षणभङ्गक्रियारूपे यागेऽनुपपत्त्या कल्प्यते। तदनाघ्रातवेदसिद्धान्तानाम्। सर्वैः कर्मभिराराधितो भगवान्नारायण एव तत्तदिष्टं फलं ददातीति वेदविदो वदन्ति। वेदविदग्रेसरद्रविणाचार्यवचनं प्रमाणम्। तथा हि व्याचष्टे कर्मभिरात्मानमपि प्रीणन्ति। स प्रीतोऽलं फलायेति शास्त्रमर्यादा। इन्द्रायेति चतुर्थ्यन्तशब्दप्रयोगेण इन्द्रोद्देशेन हविःप्रक्षेपः तद्रूपाराधनमिन्द्रान्तर्यामिणो नारायणस्येति। इन्द्रयाग इन्द्राराधनम्। तदाराधनमिन्द्रनारायणानुध्यानपूर्वकं फलाभिसन्धिरहितमनुष्ठितम्, तेन प्रीतो नारायणो ज्ञानोत्पत्तिविरोधि पापनाशरूपं फलं प्रयच्छति। नारायणध्यानरहितफलाभिसन्धियुक्तेन्द्रभगवच्छरीराराधनमर्थतो नारायणाराधनम्, तेन प्रीतो नारायणस्तत्तदिष्टं प्रयच्छतीति शास्त्रमर्यादा। उक्तमर्थं प्रमाणितवान् द्रविडाचार्यः। फलसम्बन्धेच्छया कर्मभिर्यागादिभिरिन्द्रादिमुखेनेन्द्रादिशरीराराधनद्वारेण तदन्तर्यामि-

इन्द्राग्निवरुणादिसर्वदैवतसम्बन्धितया प्रतीयमानम्, तदान्तरात्मयाऽवस्थितः परमपुरुषः स्वयमेव बिभर्ति। स्वयमेव स्वीकरोति भुवनस्य नाभिः। ब्रह्मक्षत्रादिसर्ववर्णपूरणस्य भुवनस्य धारकः, तैस्तैः कर्मभिराराधितः, तत्तदिष्टफलप्रदानेन भुवनानां धारक इति, नाभिरित्युक्तः। अग्निवायुप्रभृतिदेवतान्तरात्मतया तत्तच्छब्दाभिधेयोऽयमेवेत्याह—"तदेवाग्निस्तद्वायुस्तत्सूर्यः तदु चन्द्रमाः" इति। यथोक्तं भगवता—

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥
स तया श्रद्धया युक्तस्तस्याऽऽराधनमीहते।
लभते च ततः कामान् मयैव विहितान् हि तान्[1]॥

यां यां तनुमिति, इन्द्रादिदेवताविशेषास्तदन्तर्यामितयाऽवस्थितस्य भगवतस्तनवः शरीराणीत्यर्थः। "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च"[2] इत्यादि। प्रभुरेव सर्वफलानां प्रदाता चेत्यर्थः। यथा च—

यज्ञैस्त्वमिज्यसे नित्यं सर्वदेवमयोऽच्युत।
यैः स्वधर्मपरैर्नाथ नवैराराधितो भवान्॥
ते तरन्त्यखिलामेतां मायामात्मविमुक्तये॥ इति।

---

नारायणमिन्द्रशब्दवाच्यं वासुदेवमाराधयितुमिच्छन्ति। तैः कर्मभिराराधितो नारायणः फलं प्रयच्छति।

तथा चोक्तार्थे प्रमाणं श्रुतिः—"इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः"। इष्टापूर्तमिति। श्रौतं ज्योतिष्टोमादि, इष्टं दानहोमव्रतदेवप्रतिष्ठा-रुद्रादिदेवाराधनादि, स्मार्तकर्मपञ्चमहायज्ञादि तथा पूर्तम्। इत्थं सकलश्रुतिस्मृतिचोदितं कर्म तद्विश्वं बिभर्ति। तद्व्याख्यानम्—इन्द्राग्निवरुणादिदेवसम्बन्धितया तत्तद्यागादि-रूपेण प्रसिद्धं तत्तदिष्टापूर्तम्, इन्द्राद्यन्तरात्मतयाऽवस्थितो नारायण एव बिभर्ति, स्वयमेव स्वीकरोति। स्वाराधनं मनुते। भुवनस्य नाभिर्धारकः। तत्तत्कर्माराधितः प्रीतस्तत्तदिष्टं प्रयच्छन् ब्राह्मणक्षत्रादिलक्षितसर्वपूरणस्य जगतो धारकः, पोषकः, अग्न्यादिशब्दानामन्तरात्मतयाऽवस्थितो नारायणाऽभिधेयः। तत्र प्रमाणम्—

---

१. श्रीमद्भगवद्गीता—७।२१-२२; २. तत्रैव—९।२४।

सेतिहासपुराणेषु सर्वेष्वेव च वेदेषु सर्वाणि कर्माणि सर्वेश्वराराधनरूपाणि। तैस्तैराराधनकर्मभिराराधितः पुरुषोत्तमस्तत्तदिष्टं फलं ददातीति तत्र तत्र प्रपञ्चितम्। एवमेव हि सर्वशक्ति सर्वज्ञं सर्वेश्वरं भगवन्तं इन्द्रादिदेवतान्तर्यामिरूपेण यागदानहोमादिवेदोदितसर्वकर्मणां भोक्तारं सर्वफलानां प्रदातारञ्च सर्वाः श्रुतयो वदन्ति। चतुर्होतारो यत्र सम्पदं गच्छन्ति, दैवैरित्याद्याः। चतुर्होतारो यज्ञा यत्र परमात्मनि देवेषु अन्तर्यामिरूपेणावस्थिते दैवैः सम्पदं गच्छन्ति, दैवैः सम्बन्धं गच्छन्तीत्यर्थः। अन्तर्यामिरूपेणावस्थितस्य परमात्मनः शरीरतयावस्थितानामिन्द्रादीनां यागादिसम्बन्ध इत्युक्तं भवति। यथोक्तं भगवता—

"भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्[1]"। इति।

तस्मादिन्द्रादिदेवतान्तरात्मभूतपरमपुरुषाराधनरूपाणि कर्माणि, स एव चाभिलषितफलप्रदातेति। किन्नामापूर्वेण व्युत्पत्तिपथदूरवर्तिना वाच्यतयाभ्युपगतेन कल्पितेन वा प्रयोजनम्। एवञ्च सति लिङ्गादेः

"तदेवाग्निस्तद्वायुस्तत्सूर्यः तदु चन्द्रमाः" इति। नारायणतनुशिवादिदेवाराधनेन प्रीतः स फलं प्रयच्छतीत्यर्थे गीतावचनं प्रमाणम्—यो यो या यां तनुमित्यादि। इन्द्रादिरेवान्तःस्थितस्य नारायणस्य तनवः। सर्वयज्ञकृततोषवत्त्वं विष्णोरेवेत्यत्र मानम्—अहं हि सर्वयज्ञानां भोक्तेति। भोक्तृत्वं यजनकृततोषवत्त्वम्। यज्ञफलदातृत्वे मानं प्रभुरेवेति। यज्ञफलं स्वर्गादिदातृत्वम्। एवं सेतिहासपुराणेषु सर्वयज्ञाराधितस्य विष्णोः फलप्रदत्वमुक्तम्। उक्तार्थं श्रुतयो वदन्ति। चतुर्होतारो यत्र सम्पदं गच्छन्ति, दैवैरित्याद्याः। सम्पदिति प्राप्त्यर्थः। चतुर्होतारो यज्ञा ऋत्विक्चतुष्टयसम्पन्नत्वाद् यत्र परमात्मनि दैवैरिन्द्रादिभिः प्राप्तिसम्बन्धं गच्छन्ति। अन्तर्यामिरूपेणावस्थितस्य नारायणस्य शरीरभूतानामिन्द्रादीनां यज्ञैः सम्बन्धो यजनलाभः। गीतावचनम्—"भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्" इत्यादि। तस्मात्सर्वाणि यज्ञादिकर्माणि भगवदाराधनरूपाणि। भगवान् सर्वेश्वरो यज्ञादिफलदाता इति, किमपूर्वकल्पनेन? व्युत्पत्तिविरोधो न हि लिङः स्वतः सुखरूपप्रधानापूर्वे शक्तिः। कल्पितत्वं यागस्य क्षणिकस्य स्वर्गसाधनत्वानुपपत्त्या भवतु नाम भगवतः कर्माराधितत्वम्, तत्प्रीतत्वमिष्टप्रदत्वञ्च।

१. श्रीमद्भगवद्गीता—५।२९।

कोऽयमर्थः ? परिगृह्णीदिति चेत्, 'यज्' देवपूजायामिति देवताराधनरूपयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां लिङादयोऽभिदधतीति न किञ्चिदनुपपन्नम्। कर्तृवाचिनां प्रत्ययानां प्रकृत्यर्थस्य कर्तृव्यापारसम्बन्धप्रकारो हि वाच्यः। भूतवर्तमानतादिकमन्ये वदन्ति। लिङादयस्तु कर्तृव्यापारसाध्यतां वदन्ति।

अपि च कामिनः कर्तव्यतया कर्म विधाय कर्मणो देवताराधनरूपतां तद्द्वारा फलसिद्धिं च तत्तत्कर्मविधिवाक्यान्येव वदन्ति। वायव्यं श्वेतमालभेद् भूतिकामो वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयतीत्यादीनि। नात्र फलसिद्ध्यनुपपत्तिः काचिदपि दृश्यत इति। फलसाधनत्वावगतिरौपादानिकीत्यपि न सङ्गच्छते। विध्यपेक्षितं यागादेः फलसाधनत्वप्रकारं वाक्यशेष एव बोधयतीत्यर्थः। तस्माद् ब्राह्मणाय नापगुरेतेत्यत्र अपगोरणनिषेधविधिवाक्यशेषे श्रूयमाणं निषेधस्यापगोरणस्य शतयातनासाधनत्वं निषेधविध्युपयोगीति हि स्वीक्रियते।

अत्र पुनः कामिनः कर्तव्यतया विहितस्य यागादेः काम्यस्वर्गादिसाधनत्वप्रकारं वाक्यशेषावगतमनादृत्य किमित्युपादानेन यागादेः फलसाधनत्वं प्रकल्प्यते। हिरण्यनिधिमपवरके निधाय याचते कोद्रवादि

---

यजेदित्यत्र लिङर्थः कः ? यज्धातोर्देवपूजार्थः, लिङर्थः कर्तृव्यापारसाध्यत्वम्, देवाराधनं कर्तृव्यापारसाध्यमिति बोधः। कर्तृप्रत्ययानां कर्तृव्यापारसम्बन्धप्रकारोऽर्थो भूतवर्तमानतादिकं लिङतिरिक्तप्रत्यया वदन्ति। लिङादयः कर्तृव्यापारसाध्यतां वदन्ति। यागस्तु देवाराधनरूपतां देवद्वारा तत्फलप्राप्तिञ्च विधिवाक्यमभिधत्ते।

'वायव्यं पशुमालभेद् भूतिकामः' इत्यत्रार्थवादो हि 'वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागेनोपधावति, स एवैनं भूतिं गमयतीति' अनेनार्थवादेन वायुदेवताकयागस्य वाय्वाराधनरूपता, आराधितप्रीतस्य वायोः भूतिरूपफलप्रदत्वञ्च प्रोच्यते, इति शब्देनैव देवताद्वारा कर्मणां फलजनकत्वम् अवगतम्। किमर्थापत्तिरूपोपादानप्रमाणेन स्वर्गसाधनत्वानुपपत्त्या स्थिरापूर्वकल्पनेन अर्थवादस्य न कर्मस्तुतिमात्रतात्पर्यकत्वम्। विधिनापेक्षितं फलम्, तत्साधनत्वञ्चार्थवादेन बोध्यते। अत एव तस्मान्न ब्राह्मणायाप-

लुब्धः कृपणं जनमिति श्रूयते। तदेतद् युष्मासु दृश्यते। शतयातनासाधनत्वमपि नादृष्टद्वारेण चोदितान्यनुतिष्ठतो विहितं कर्माकुर्वतो निन्दितानि च कुर्वतः सर्वाणि सुखानि दुःखानि च परमपुरुषानुग्रहनिग्रहाभ्यामेव भवन्ति। "एष ह्येवानन्दयति, अथ सोभयं गतो भवति, अथ तस्य भयं भवति, भीषास्माद्वातः पवते, भीषोदेति सूर्यः, भीषास्मादग्निश्चेन्द्रश्च, मृत्युर्धावति पञ्चमः" इति। "एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः। एतस्य वाक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति। यजमानं देवा दर्वीं पितरोऽन्वायत्ताः" इत्याद्यनेकविधाः श्रुतयः सन्ति। यथोक्तं द्राविडभाष्ये—तस्याज्ञया धावति वायुर्नद्यः स्रवन्ति, तेन च कृतसीमानो जलाशयाः समदा इव मेषविसर्पितं कुर्वन्ति। तत्सङ्कल्पनिबन्धना हीमे लोका न च्यवन्ते न स्फुटन्ते, स्वशासनानुवर्तिनं ज्ञात्वा कारुण्यात् स भगवान् वर्धयेत्, विद्वान् कर्मदक्ष इति च। परमपुरुषयाथात्म्यज्ञानपूर्वकं तदुपासनादिविहितकर्मानुष्ठायिनः तत्प्रसादात् तत्प्राप्तिपर्यन्तानि सुखान्यभयञ्च यथाधिकारं भवन्ति। तज्ज्ञानपूर्वकं तदुपासनादिविहितं कर्माकुर्वतो निन्दितानि च कुर्वतस्तन्निग्रहादेव तदप्राप्तिपूर्वकापरिमितदुःखानि भयञ्च भवन्ति। यथोक्तं भगवता—

---

गुरेतेत्यत्रापगोरणनिषेधविधिवाक्यशेषेणार्थवादेन समर्पितशतयातनासाधनत्वं निषेधविध्यपेक्षितं स्वीक्रियते। अथ पुनः यजेदिति विहितस्य यागस्य वाक्यशेषावगतं देवद्वारा स्वर्गसाधनत्वप्रकारमनादृत्य विध्याक्षेपेणापूर्वकल्पनम्। अपवरके कोणे हिरण्यं निधाय कोद्रवादि याचते, इतिवदुपहास्यमेव शतयातनासाधनत्वमपगोरणे नादृष्टद्वारेण। विहितेन तुष्टो निषिद्धेन रुष्टो देव एवेष्टानिष्टे प्रयच्छतीति देवद्वारैवापगोरणस्य शतयातनासाधनत्वं बोध्यम्। अत्रार्थे श्रुतयो नारायणस्य विहिताविहिताभ्यां कर्मभ्यां प्रीताप्रीतस्येष्टानिष्टफलजनकत्वबोधिकाः प्रमाणम्। तथा हि "एष एवानन्दयाति", "सोऽभयं गतो भवति", "भीषास्माद्वातः पवते, भीषोदेति सूर्यः" इत्याद्याः। द्रविडाचार्योऽपि उक्तार्थं द्रढयति। तस्याज्ञया धावति वायुर्नद्यः स्रवन्ति, तेन कृतसीमानो जलाशयाः समदा इव मेषविसर्पितं कुर्वन्ति। मेषविसर्पितम्—

"नियतं कुरु कर्म त्वं कर्मज्यायो ह्यकर्मणः[1]" इत्यादिना।

कृत्स्नं कर्मज्ञानपूर्वकमनुष्ठेयं विधाय मयि सर्वाणि कर्माणि संन्यस्य सर्वस्य कर्मणः स्वाराधनतामात्मना स्वनियाम्यताञ्च प्रतिपाद्य—

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः॥
ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः[2]॥

इति स्वाज्ञानुवर्तिनः प्रशस्य विपरीतान् विनिन्द्य पुनरपि स्वाज्ञानुपालनमकुर्वतामासुरप्रकृत्यन्तर्भावमभिधाय अधमा गतिश्चोक्ता—

तानहं द्विषतः क्रूरान् संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्[3]॥ इति।

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्[4]॥ इति च।

---

उज्जृम्भणम्—जलोन्नतिः। अलङ्घितसीमानो हि समुद्रा जलोन्नतिं कुर्वन्तीत्यर्थः, तेन तस्यैव भयाभयप्रदत्वं सिद्ध्यति। उपास्योपासकयथार्थस्वरूपज्ञानपूर्वकमुपासनादि विहितकर्म कुर्वतो ब्रह्मप्राप्तिपर्यन्तानि सुखानि, अभयञ्च भवन्ति। विहितकर्माकुर्वतो निषिद्धानि कुर्वतो दुःखानि भयञ्च भवन्तीति श्रुतितात्पर्यम्। विहितं कुर्वतः सुखप्राप्तौ तदकुर्वतो दुःखप्राप्तौ, परमात्मा वासुदेवः कारणम्, अत्र गीतावचनमुद्धरति—**यथोक्तं भगवतेति**। "नियतं कुरु कर्म त्वं कर्मज्यायो ह्यकर्मणः" इत्यादि। नियतं कुरु कर्मेत्यनेन सर्वकर्मणां स्वज्ञानपूर्वकत्वमुच्यते। मयि सर्वाणि कर्माणीति सर्वकर्मणां स्वाराधनरूपतोच्यते। ये त्वेतदित्यादिना स्वाज्ञालङ्घिनाम् आसुरयोनिप्राप्तिरुच्यते। सर्वकर्माण्यपीत्यादिना भगवदाराधनरूपेण कर्माण्यनुष्ठातुः शाश्वतफलप्रदत्वं स्वस्योच्यते। यद्यपि देवताधिकरणे देवनिरपेक्षस्य कर्मणः स्वर्गादिफलजनकत्वमुक्तम्। तत्तु देवतायां

---

१. श्रीमद्भगवद्गीता—३।८; २. तत्रैव—३।३१-३२; ३. तत्रैव—१६।१९-२०। ४. तत्रैव—१८।५६।

स्वाज्ञानुवर्तिनां शाश्वतपदं चोक्तम्। अश्रुतवेदान्तानां कर्मणि अश्रद्धा मा भूदिति देवताधिकरणेऽतिवादाः कृताः। कर्ममात्रे यथा श्रद्धा स्यादिति। सर्वमेकशास्त्रमिति वेदवित्सिद्धान्तः।

तस्यैतस्य परस्य ब्रह्मणो नारायणस्याच्छेद्यज्ञानानन्दामलत्वस्वरूपवज्ज्ञान-शक्ति-बलैश्वर्य - वीर्य - तेजःप्रभृत्यनवधिकातिशयासंख्येयकल्याणगुणवत् स्वसङ्कल्पं प्रवर्त्य स्वेतरसमस्तचिदचिद्वस्तुजातवत् स्वाभिमतस्वानुरूपैकरूपदिव्यरूपतदुचितनिरतिशयकल्याणविविधानन्तभूषणस्वशक्तिसदृशापरिमितानन्ताश्चर्यनानाविधायुधस्वाभिमतस्वानुरूपस्वरूपगुणविभवैश्वर्यशीलाद्यनवधिकमहिममहिषी स्वानुरूपकल्याणज्ञानक्रियाद्यपरिमेयगुणानन्तपरिजनपरिच्छेदस्वोचितनिखिलभोग्यभोगोपकरणाद्यनन्तमहाविभवा वाङ्मनसगोचरस्वरूपस्वभावदिव्यस्थानादिनित्यता-निरवद्यतागोचराश्च सहस्रशः श्रुतयः सन्ति।

---

प्रतिपाद्यमानायां कर्मण्यश्रद्धा मा भूदश्रुतवेदान्तानामेतदर्थमतिवादाः, न वस्तुस्थितिः। पूर्वोत्तरभागयोर्वेदस्याविरोधेन निर्वाहः किमर्थमिति चेत्, न, पूर्वोत्तरमीमांसयोरेकशास्त्रत्वात्।

एतावता प्रबन्धेन सर्ववेदान्तिनामभिमतसिद्धार्थे व्युत्पत्त्यभावनिरासः साधितः, अथ सर्वाभिमतां नित्यविभूतिं निरूपयति, समर्थयति च—तस्यैतस्येति। पदद्वयेन सिद्धव्युत्पत्तिस्थापनेन ब्रह्मसिद्धौ पशुच्छागन्यायेन तस्य नारायणत्वसिद्धौ प्रमाणं स्मारितम्। स्वरूपशब्दः स्वरूपनिरूपकधर्मवाची। ते धर्मा ज्ञानत्वादयो तद्वज्ज्ञानं शक्तिर्बलमैश्वर्यं वीर्यं तेजःप्रभृतय इयत्तारहिता असंख्येयाः कल्याणगुणाः। तद्वत्परमात्मा नारायण एवोक्तविशेषणसम्पन्नः, इतरे भगवत्सङ्कल्पायत्तस्वरूपस्थितिप्रवृत्तय इति स्वसङ्कल्पं प्रवर्त्य स्वेतरसमस्तचिदचिद्वस्तुजातवत् स्वाभिमतं स्वानुरूपमेकरूपं च दिव्यरूपं पूर्वमपरिच्छेद्यज्ञानत्वानन्दत्वामलत्वादयो दृष्टान्तरूपेणोक्ताः। तत्साध्यतया स्वाभिमतस्वानुरूपैकदिव्या रूपादयो निर्दिश्यन्ते। तथा स्वरूपाभिमतानि तदनुरूपाणि च। अननुरूपमपि स्वाभिमतं भवति। सुन्दरस्य दीनस्याननुरूपमपि कन्थावासोऽभिमतं भवति। तथा न भगवद्गुणाः दिव्यरूपविभूतयो भोगविभूतयश्च स्वाभिमताः, स्वानुरूपाश्च। तथा निरतिशयानि कल्याणान्यप्राकृतानि विविधान्यनन्तानि भूषणानि स्वशक्तिसदृशानि अनुरूपाणि देवाभिमतानि अपरिमितानि इयत्ता-

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । स एषोऽन्तरादित्ये हिरण्मयः पुरुषः, तस्य यथा कप्यासन्पुण्डरीकमेवमक्षिणी स य एषोऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषो मनोमय अमृतो हिरण्मयः । मनोमय इति मनसैव विशुद्धेन गृह्यत इत्यर्थः । सर्वे निमेषा यज्ञिरे विद्युतः पुरुषादधि, विद्युद्वर्णाद् पुरुषादित्यर्थः । नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा, मध्यस्थनीलतोयदा विद्युल्लेखेव सेयं दहरपुण्डरीकमध्यस्थाकाशवर्तिनी वह्निशिखा स्वान्तर्निहितनीलतोयदाभपरमात्मस्वरूपा, स्वान्तर्निहितनीलतोयदा, विद्युदिवाभातीत्यर्थः ।

मनोमयः प्राणशरीरो भारूपः, सत्यकामः, सत्यसङ्कल्पः, आकाशात्मा, सर्वकर्मा, सर्वकामः, सर्वगन्धः, सर्वरसः, सर्वमिदमभ्यात्तोऽवाक्यानादरः । तस्य महारजतं वास इत्याद्याः । अस्येशानो जगतो विष्णुपत्नी, ह्रीश्च ते लक्ष्मीश्च पत्न्यौ, तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, क्षयन्तमस्य रजसः पराके, यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्, यो वेद निहितं गुहायां परमे व्योमन्, योऽस्याध्यक्षः परमे व्योमन्, तदेव भूतं तदु भव्यमा इदम्, तदक्षरे परमे व्योमन्नित्यादि श्रुतिशतनिश्चितोऽयमर्थः । तद्विष्णोः परमं पदमिति विष्णोः पदस्य "ब्रह्मणः

---

रहितानि अनन्तानि आश्चर्यजनकानि नानाविधानि, आयुधानि स्वाभिमताः स्वानुरूपाः स्वरूपनिरूपकधर्मगुणादयः महिषीपर्यन्ताः, स्वाभिमताः स्वानुरूपाः कल्याणज्ञानक्रियादयः परिजनपरिच्छदान्ताः । तथा स्वानुरूपाः स्वाभिमता निखिलभोग्यभोगोपकरणादयः, अवाङ्मनसगोचरस्वरूपस्वभावदिव्यस्थानादिनित्यतानिरवद्यतान्तास्तद्गोचराः, तत्प्रतिपादिकाः सहस्रशः श्रुतयः सन्ति । पठ्यमानश्रुतयः, उपबृंहणानुगृहीताः खिलश्रुतयश्च वेदाहमेतमित्यादि दिव्यरूपवत्त्वे स्वरूपदिव्यत्वे प्रमाणम् । एषोऽन्तरादित्य अक्षिणीति दिव्यविग्रहवत्त्वे हिरण्यप्राचुर्ये प्रमाणम् । अमृतो मनोमय इति मनसा शुद्धेन निष्पापान्तःकरणसम्पन्नध्यानेन । सर्वे निमेषा इत्यादि पुरुषस्य विद्युद्वर्णत्वे मानम् । नीलतोयदमध्यस्थेति । दहरपुण्डरीकमध्यस्थाकाशवर्तिनी वह्निशिखा स्वान्तर्निहितनीलतोयदाभपरमात्मस्वरूपा विद्युदिवाभाति । मनोमयः प्राणशरीरो भारूप इत्यादि श्रुतयो देवस्य शरीरधारकत्वम्,

परमं पदं सदा पश्यन्ति सूरयः" इति वचनात् सर्वकालदर्शनवन्तः परिपूर्णज्ञानाः केचन सन्तीति विज्ञायते। ये सूरयस्ते सदा पश्यन्तीति वचनव्यक्तिः, ये सदा पश्यन्ति, ते सूरय इति वा। उभयपक्षेऽप्यनेकविधानं न सम्भवतीति चेत्, न, अप्राप्तत्वात् सर्वस्य सर्वं विशिष्टं परमस्थानं विधीयते। यथोक्तम्—"तद्गुणास्तु विधीयेरन् विभागाद् विधानार्थे, न चेदन्येन शिष्टाः" इति। यथा 'यदाग्नेयोऽष्टाकपालः' इत्यादि कर्मविधौ कर्मणो गुणानाञ्चाप्राप्तत्वेन सर्वगुणविशिष्टं कर्म विधीयते। तथात्रापि सूरिभिः सदा दृश्यत्वेन विष्णोः परमस्थानमप्राप्तं प्रतिपादयतीति न कश्चिद् विरोधः। करणमन्त्राः क्रियमाणानुवादिनः स्तोत्रशस्त्ररूपा जपादिषु विनियुक्ताश्च प्रकरणपठिताश्चाप्रकरणपठिताश्च

---

आकाशवत् स्वच्छत्वं सत्येष्टत्वम्, सत्यसङ्कल्पत्वम्, सर्वंजगत्कृतकत्वम्, समस्तेष्टवत्वम्, सर्वकर्मसर्वकामपदाभ्यामुभयविभूतिमत्वम्, सर्वगन्धत्वं सर्वगन्धग्रहणेन्द्रियवत्वम्, सर्वरसग्राहकेन्द्रियवत्वम्। तेन विग्रहवत्वमभ्यासः सर्वं स्वीकृतवान्।

अवाकीति। अजल्पाकत्वम्। अनादर इति तृणीकृतसकलजगत्त्वम्। तस्य महारजतं वास इति। रागविशेषोपरक्तविलक्षणवासस्वित्वम्, पीताम्बरत्वं च वदन्ति श्रुतयः। अस्येशानो जगतो विष्णुपत्नीत्यादि श्रुतिः। दिव्यपत्नीवत्वे ह्री-लक्ष्मी-पत्नीवत्वे विशेषतः प्रमाणम्। तद्विष्णोः परममित्यादि श्रुतिः विष्णोर्दिव्यदेशत्वे देशपरमत्वे प्रकृतिपरत्वे च प्रमाणम्। पूर्वोक्तोऽर्थः श्रुतिशतनिश्चितः। तद् विष्णोः परमं पदमित्यत्र दिव्यस्थानविधिः, सूरिविधिः, नित्यदर्शनवत्वविधिश्चेत्यभिप्रेत्य अच्छेद्यं परिहारं च विवक्षुः सिद्धमर्थमाह—"तद् विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति वचनेन सदा दर्शनवन्तः परिपूर्णज्ञानाः केचन सन्तीति ज्ञायते। ये सूरयः, ते सदा पश्यन्ति। ये सदा पश्यन्ति, ते सूरय इति पक्षद्वयेऽपि अनेकविधिर्न सम्भवति। स्थानसूरिसर्वकालदर्शनविधयो हि एकेन वाक्येन न भवितुमर्हन्तीति चेत्, न, अत्र अयागामपि अप्राप्तत्वेन सर्वकालदर्शनविशिष्टनित्यसूरिविशिष्टपरमस्थानस्य विधेयत्वसम्भवात्। यथोक्तं जैमिनिना—"तद्गुणास्तु विधीयेरन्, न विभागाद्विधानार्थे न चेदन्येन शिष्टाः" इति। यथा "यदाग्नेयो अष्टाकपालो अमावास्यायां चाच्युतो भवति" इत्यत्र यागस्य द्रव्यस्य देवतायाश्चाप्राप्तत्वेन अग्निदेवताकाष्टाकपालसंस्कृतपुरोडासद्रव्यकामावास्याकालिक आग्नेयसंज्ञको यागो विधीयते। तथात्र सूरिभिः सदा दृश्यत्वेन परमस्थानमप्राप्यमिति प्रतिपादयति श्रुतिरिति त्रितयविधिः विशिष्टतया भवत्येव।

स्वार्थं सर्वं यथावस्थितमेवाप्राप्तमविरुद्धं ब्राह्मणवद् बोधयन्तीति हि वैदिकाः। प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम्। अप्रगीतमन्त्र-साध्यगुणिनिष्ठगुणाभिधानं शास्त्रम्। विनियुक्तार्थप्रकाशिनाश्च देवतादिष्व-प्राप्ताविरुद्धगुणविशेषप्रतिपादनं विनियोगानुगुणमेव। नेयं श्रुतिर्मुक्तजन-विषया, तेषां सदा दर्शनानुपपत्तेः। नापि मुक्तप्रवाहविषया, सदा पश्यन्तीत्येकैककर्तृविषयतया प्रतीतेः। श्रुतिभङ्गप्रसङ्गाद् मन्त्रार्थवादा-वगता ह्यर्थाः कार्यपरत्वेऽपि सिद्ध्यन्तीत्युक्तम्। किं पुनः सिद्धवस्तुन्येव तात्पर्ये व्युत्पत्तिसिद्धे, इति सर्वमुपपन्नम्।

ननु चात्र तद्विष्णोः परमं पदमिति परस्वरूपमेव परमपदशब्देना-भिधीयते, समस्तहेयरहितं विष्णवाख्यं परमं पदमित्यादिषु अव्यतिरेक-दर्शनात्। नैवम्, "क्षयन्तमस्य रजसः पराके", "तदक्षरे परमे व्योमन्", "योऽस्याध्यक्षः परमे व्योमन्", "यो वेद निहितं गुहायां परमे व्योमन्"

---

ननु 'तद् विष्णोः' इति मन्त्रस्यानुष्ठेयार्थप्रकाशकत्वेन स्वार्थे तात्पर्याभावाद् विशिष्टविधिर्न सम्भवतीति चेत्, न, होमसाधनत्वेन विहिताः करणमन्त्राः क्रियमाणा-नुवादिनः स्तोत्रगानविशिष्टोच्चारणं शास्त्रं गानरहितं तद्रूपाः जपादिषु विनियुक्ताः। जप उपांशूच्चारणम्। आदिपदेनाध्ययनमुच्चैरुच्चारणम्, प्रकरणाधीतानधीताश्च सर्वे स्वार्थं स्ववाक्यार्थमविरुद्धमप्राप्तयथावस्थितमेव वदन्ति। तेन विशिष्टविधौ न प्रतिबन्धः, मोक्षप्रकरणानधीतत्वमन्त्रत्वकृतः। वस्तुतस्तु सुबालोपनिषदि मोक्ष-प्रकरणे अधीतापि श्रुतिः, ब्राह्मणं विधायकं यथा स्वार्थपरं तथा पूर्वोक्ता अपि स्वार्थ-पराः विनियुक्तार्थप्रकाशिनामैन्द्र्या गार्हपत्यमुपतिष्ठते, सावित्र्या गार्हपत्यमुपतिष्ठते, इत्यादिनां विनियोगभेदेऽपि नेन्द्रादिदेवताकत्वहानिः। तद् विष्णोरिति श्रुतिर्न मुक्तविषया, तत्र सदा दर्शनाभावात्। न मुक्तप्रवाहविषया, एकैककर्तृत्वश्रवणात्।

तद् विष्णोरित्यत्र परमपदशब्देन विष्णोः स्वरूपं विवक्षितम्, समस्तहेयरहित-मित्यत्र परमपदस्य नारायणानन्यपरत्वदर्शनात्। नैवम्, "क्षयन्तमस्य रजसः पराके" इत्यादि श्रुतौ निवासरूपक्षयाधिकरणतया परमव्योम्नो निर्देशेन परमस्थानस्यैव परमपदेन प्रदर्शनात्, तद्विष्णोरिति षष्ठीनिर्देशेन परमपदार्थाद्भेदप्रतीतेश्च। विष्णवा-ख्यं परमं पदमित्यत्र परमपदपदार्थस्य विष्णुस्वरूपविशेषितत्वेन विष्णुभिन्नस्यापि तत्पदार्थस्य सत्त्वसिद्धेः। विशेषणस्येतरव्यावर्त्तकतयैव सिद्धेः, एकान्तिनः सदा ब्रह्म-

इत्यादिषु परमस्थानस्यैव प्रदर्शनात्, तद्विष्णोः परमं पदमिति व्यतिरेकनिर्देशाच्च। विष्ण्वाख्यं परमं पदमिति विशेषणादन्यदपि परं पदं विद्यत इति च तेनैव ज्ञायते। तदिदं परमं स्थानं सूरिभिः सदा दृश्यत्वेन प्रतिपाद्यते।

एतदुक्तं भवति—क्वचित्परमं स्थानं परमपदशब्देन प्रतिपाद्यते, क्वचित्प्रकृतिवियुक्तात्मस्वरूपम्, क्वचिद्भगवत्स्वरूपम्, "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति परमं स्थानम्, "सर्गस्थित्यन्तकालेषु त्रिधैवं सम्प्रवर्तते, गुणप्रवृत्त्या परमं पदं तस्यागुणं महत्" इत्यत्र प्रकृतिवियुक्तात्मस्वरूपम्, "समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्" इत्यत्र भगवत्स्वरूपम्। त्रीण्यप्येतानि परमप्राप्यत्वेन परमपदशब्देन प्रतिपाद्यन्ते, कथं त्रयाणां परमप्राप्यत्वमिति चेत्, भगवत्स्वरूपं परमप्राप्यत्वादेव परमम्, इतरयोरपि भगवत्प्राप्तिगर्भत्वादेव परमपदत्वम्। सर्वकर्मबन्धविनिर्मुक्तात्मस्वरूपावाप्तिर्भगवत्प्राप्तिगर्भेति। "त इमे सत्याः कामा

---

ध्यायिनो योगिनो हि ये इति विष्णुपुराणवचनेन तस्य स्थानशब्देनोपबृंहणाच्च तदिदं सदा दृश्यत्वेन सूरिभिः प्रतिपाद्यते।

इत्थमनेकार्थपरं परमपदं पदमिति प्राप्ते आह—एतदुक्तं भवतीति। परमपदशब्देन क्वचित् स्थानं क्वचित्प्रकृतिवियुक्तात्मस्वरूपं क्वचिद् भगवत्स्वरूपं तद्विष्णोरित्यत्र स्थानपरं सर्गस्थित्यन्तकालेषु त्रिधैव सम्प्रवर्तन्ते। इत्थं गुणं परमं पदमिति परमपदेन प्रकृतिवियुक्तात्मस्वरूपम्, समस्तहेयरहितं विष्ण्वाख्यमित्यत्र विष्णुस्वरूपपदमिति परममुत्कृष्टं पद्यते प्राप्यते यत्तत्परमं पदमिति कर्मव्युत्पत्त्या परमप्राप्यत्वेन परमपदेन त्रयोऽर्था उच्यन्ते। कथं तदिति चेत्तदाह—भगवत्स्वरूपं परमप्राप्यत्वादेव परमम्। स्थानप्रकृतिवियुक्त्यात्मस्वरूपयोस्तु भगवत्प्राप्तिघटितत्वेन परमपदवाच्यत्वम्। कर्मबन्धविनिर्मुक्तात्मस्वरूपप्राप्तिर्भगवत्प्राप्तिसहिता। तथा हि 'अनृतापिधाना' इत्यत्रानृतशब्देन स्वकर्मबन्ध उच्यते। स एव भगवत्प्राप्तिप्रतिबन्धकस्तन्निर्मोके भगवत्प्राप्तिः। साक्षात्कारोऽर्थतः सिद्ध इति प्रकृतिवियुक्तात्मस्वरूपाविर्भावो नाम भगवत्स्वरूपसाक्षात्कारविभुधर्मभूतज्ञानविशिष्ट जीवस्वरूपाविर्भावः। अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिति अनृततिरोधानापररूपाविद्यापदेन जीवकर्मोच्यते।

अनृतापिधाना" इति भगवतो गुणगणस्य तिरोधायकत्वेनानृतशब्देन स्वकर्मणः प्रतिपादनात् । अनृतरूपतिरोधानं क्षेत्रज्ञकर्मेति कथमवगन्तव्यमिति चेत्—

"अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ।।
संसारतापानखिलानवाप्नोत्यतिसन्ततान् ।
तया तिरोहितत्वाच्च..........." ।।

इत्यादि वचनात् परस्थानप्राप्तिरपि भगवत्प्राप्तिगर्भैवेति सुव्यक्तम् । "क्षयन्तमस्य रजसः पराके" इति रजश्शब्देन त्रिगुणात्मिका प्रकृतिरुच्यते, केवलस्य रजसोऽनवस्थानात् । इमां त्रिगुणात्मिकां प्रकृतिमतिक्रम्य स्थिते स्थाने क्षयन्तं वसन्तमित्यर्थः । अनेन त्रिगुणात्मकात् क्षेत्रज्ञस्य भोग्यभूताद्वस्तुनः परस्ताद्विष्णोर्वासस्थानमिति गम्यते । वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तादित्यत्रापि तमश्शब्देन सैव प्रकृतिरुच्यते । केवलस्य तमसोऽनवस्थानादेव "रजसः पराके क्षयन्तम्" इत्यनेनैकवाक्यत्वात्तमसः परस्ताद्वसन्तं महान्तमादित्यवर्णं पुरुषमहं वेदेत्ययमर्थोऽवगम्यते । "सत्यं ज्ञानमनन्तं ब्रह्म", "यो वेद निहितं गुहायां परमे व्योमन्", "तदक्षरे परमे व्योमन्" इति तत्स्थानमविकाररूपं परमव्योमशब्दाभिधेयमिति च गम्यते । अक्षरे परमे

---

परस्थानप्राप्तिरपि भगवत्प्राप्तिगर्भैवेति "क्षयन्तमस्य रजसः पराके"इति रज उपलक्षितप्रकृतिभिन्नविष्णुविशिष्टविलक्षणस्थानप्राप्तिः संयोगसाक्षात्कारादिपरस्थानप्राप्तिरिति भगवत्प्राप्तिगर्भत्वं सिद्धम् । वेदाहमेतं पुरुषं महान्तमित्यत्र तमसः परस्तादिति तमःपदेन प्रकृतिरेवोच्यते, केवलस्यानवस्थानात्,'रजसः पराके' इत्येकवाक्यत्वात् । सत्यं ज्ञानमनन्तमित्यादि श्रुतिघटकव्योमशब्दोऽपि विकारशून्यविष्णुस्थानपरः, अक्षरपदेन तत्स्थानस्य नित्यत्वोक्तेः ।

अक्षरत्वोक्तिरेवाक्षररूपादित्यमण्डलाच्चैनं परमव्योमपदार्थाः । यत्र पूर्वे साध्याः, यत्रर्षयः अग्रमजा इत्यादिषु त एव, सदा दर्शनवन्त एवोच्यन्ते । तद्विप्रासो विपन्यव इत्यत्रापि मेधाविनो विप्रासः स्तुतिशीलाः विपन्यवः जागृवांस अस्खलितज्ञानाः,

व्योमन्नित्यस्य स्थानस्याक्षरत्वश्रवणात् क्षररूपादित्यमण्डलादयो न परमव्योमशब्दाभिधेयाः। "यत्र पूर्वे साध्याः सन्ति देवाः", "यत्रर्षयः प्रथमजा ये पुराणाः" इत्यादिषु च त एव सूरय इत्यवगम्यते। तद्विप्रासो विपन्यवो जागृवांसः समिन्धते विष्णोर्यत्परमं पदमित्यत्रापि विप्रासो मेधाविनो विपन्यवः स्तुतिशीलाः, जागृवांसः—अस्खलितविज्ञानाः, त एवास्खलितविज्ञानास्तद्विष्णोः परमं पदं सदा स्तुवन्तस्समिन्धत इत्यर्थः। एतेषां परिजनस्थानादीनां सदेव सोम्येदमग्र आसीदित्यत्र ज्ञानबलैश्वर्यादिकल्याणगुणगणत्वपरब्रह्मस्वरूपान्तर्गतत्वात्, सदेवैकमेवाद्वितीयमिति ब्रह्मान्तर्भावोऽवगम्यते। एषामपि कल्याणगुणैकदेशत्वादेवं "सदेव सोम्येदमग्र आसीत्" इत्यत्रेदमिति शब्दस्य कर्मवश्यभोक्तृवर्गमिश्रतद्भोग्यभूतप्रपञ्चविषयत्वाच्च। "सदा पश्यन्ति सूरयः" इति सदा दर्शित्वेन च तेषां कर्मवश्यानन्तर्भावाद् अपहतपाप्मेत्याद्यपिपास इत्यन्तेन "सलीलोपकरणभूतत्रिगुणात्मकप्रकृतिप्राकृततत्संसृष्टपुरुषगतं हेयस्वभावं सर्वं प्रतिषिध्य सत्यकाम" इत्यनेन स्वभोग्यभोगोपकरणजातस्य सर्वस्य सत्यता प्रतिपादिता। सत्याः कामा यस्यासौ सत्यकामः, काम्यन्त इति कामाः, तेन परब्रह्मणा स्वभोग्यतदुपकरणादयः स्वाभिमता ये काम्यन्ते, ते सत्या नित्या इत्यर्थः। अन्यस्य लीलोपकरणस्यापि वस्तुनः प्रमाणसम्बन्धयोग्यत्वे सत्यपि

---

त एव विष्णोः परमस्थानं सदा स्तुवन्तः समिन्धते प्रकाशन्ते, सदेव सोम्येदमग्र आसीदित्यत्र सच्छब्देन कारणान्तर्गतज्ञानादिगुणानां ग्रहणात्, तथा नित्यविभूतीनामपि। तेनैकद्वितीयपदगम्यमानेन कार्यावस्थापन्नकारणावस्थापन्नयोरेकत्वेन न विरोधः। एषां परिजनस्थानादीनामपि कल्याणगुणैकदेशत्वात् कल्याणं प्राकृतगुणो विशेषणाय इति अप्राकृतविशेषणैकदेशत्वात् सच्छब्देन यथा ज्ञानादि विशिष्टं तथा नित्यविभूतिविशिष्टमपि प्रोच्यते। इदमाप्राकृतप्रापञ्चतद्बद्धजीवनिर्देशात्, सदा पश्यन्तीत्यत्र सदा दर्शित्वेन नित्यसूरीणां कर्मवश्यत्वान्तर्भावात्। स्वलीलोपकरणस्य प्राकृततत्संसृष्टपुरुषगतहेयगुणान् प्रतिषिद्धय सत्यकाम इत्यादिना स्वभोग्यादीनां सत्यता प्रतिपादिता। सत्यकामपदस्य सत्येष्टबोधकत्वेन परब्रह्माभिमतानां भोग्यतदुपकरणादीनां सत्यत्वमुक्तं भवति। यथापि लीलोपकरणस्य प्राकृतवस्तुनोऽपि प्रमाण-

विकारास्पदत्वेनास्थिरत्वात्तद्विपरीतं स्थिरत्वमेषां सत्यपदेनोच्यते, सत्य-सङ्कल्प इति। एतेषु भोग्यतदुपकरणादिषु नित्येषु निरतिशयेषु अनन्तेषु सत्स्वपि अपूर्वाणामपरिमितानामर्थानामपि सङ्कल्पमात्रेण सिद्धिं वदति। एषां च भोगोपकरणानां लीलोपकरणानां चेतनानामचेतनानां स्थिराणामस्थिराणां च तत्सङ्कल्पायत्तस्वरूपस्थितिप्रकृतिभेदादिसर्वं वदति 'सत्यसङ्कल्प' इति।

इतिहासपुराणयोर्वेदोपबृंहणयोश्चायमर्थ उच्यते—

तौ तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ।
वेदोपबृंहणार्थाय तावग्राहयत प्रभुः॥

इति वेदोपबृंहणतया प्रारब्धे श्रीरामायणे—

व्यक्तमेव महायोगी परमात्मा सनातनः।
अनादिमध्यनिधनो महतः परमो महान्॥

तमसः परमो धाता शङ्खचक्रगदाधरः।
श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः॥

---

सम्बन्धादित्वरूपं सत्यत्वमस्ति, तथापि विकारास्पदस्य पदत्वेनास्थिरत्वात् तद्विपरीतं स्थिरत्वमेषामुच्यते। सत्यसङ्कल्पपदेन नित्यविभूतीनां परिजनस्थानादीनां सत्यत्वाव्यभिचारोऽपि अपूर्वाणाम्, परिमितानामर्थानामपि सङ्कल्पमात्रेण सिद्धिरुच्यते। अपरञ्च सत्यकामपदं भोगोपकरणानाम्, लीलोपकरणानाम्, चेतनाचेतनानाम्, स्थिरास्थिराणाम्, सर्वेषां तत्सङ्कल्पायत्तस्वरूपस्थितिप्रवृत्तिभेदादि वदति च।

दिव्यपरिजनस्थानादिनित्यविभूतिरूपेऽर्थे अनधीतशाखोपबृंहणतया श्रीरामायणेऽपि भूषणादिकण्ठोक्ति च दर्शयितुमुपक्रमते—इतिहासपुराणयोरिति। तत्र रामायणस्य काव्यत्वेनाप्रामाण्यशङ्कानिरासपूर्वकं प्रामाण्यं प्राक् स्थापयति—

तौ तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ।
वेदोपबृंहणायैव तावग्राहयत प्रभुः ॥

इत्यनेन श्रीरामायणे मेधावी श्रीवाल्मीकिः, महाभारतादौ श्रीव्यासः। तत्र काव्यकञ्चुकितो वेदार्थः प्रतिपादितः सर्वजनबुद्धिरोहणाय। यथोक्तं महाभारते—

शरा नानाविधाश्चापि धनुरायतविग्रहम् ।
अन्वगच्छन्त काकुत्स्थं सर्वे पुरुषविग्रहाः ॥

विवेश वैष्णवं धाम सशरीरस्सहानुगः ।

श्रीमद्वैष्णवपुराणे—

समस्ताः शक्तयश्चैता नृप ! यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥

मूर्तं ब्रह्म महाभाग ! सर्वब्रह्ममयो हरिः ।
नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी ।
यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम ॥

देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी ।
विष्णोर्देहानुरूपां वै करोत्येषात्मनस्तनुम् ॥

एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये ।
तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः ॥

कला मुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः ॥

---

विभेति गहनाच्छास्त्रान्नरस्तीव्रादिवौषधात् ।
भारतः शास्त्रसारोऽयमतः काव्यात्मना कृतः ॥ इति ।

"साक्षान्नारायणो देव...." इत्यादि वाल्मीकिवचनेन साक्षान्नारायणस्वरूपस्य रामभद्रस्य "व्यक्तमेव महायोगी परमात्मा सनातनः" इत्यारभ्य "विवेश वैष्णवं धाम सशरीरः सहानुगः" इत्यन्तेन ग्रन्थेन अनादिमध्यनिधन इति स्वरूपनित्यत्वम्, शाश्वतपदेन गुणविशिष्टाकारेण नित्यत्वम्, ध्रुव इति विग्रहविशिष्टाकारेण नित्यत्वम्, नित्यश्रीरिति श्रीपत्नीवत्वञ्च प्रतिपाद्यन्ते, शेषपदैः शंखादिनित्यायुधवत्वञ्च । तथा श्रीपराशरवचनमपि—समस्ताः शक्तयश्चैता इत्यादि । तत्र तदीश्वररूपवैरूप्यमिति हरेर्विलक्षणस्वरूपत्वं सर्वब्रह्ममयम्, इति शुद्धजीवेशत्वादिसम्पन्नजीवमयत्वमुच्यते—नित्यैवेति । दिव्यलक्ष्मीपत्नीवत्त्वं नित्यसहचारिणीत्वञ्च परमस्थानत्वादिकञ्च प्रोक्तं परिणामहेतुरित्यन्तेन । महाभारतेऽपि दिव्यं स्थानमजरमित्यादिना न कालस्तत्र वै प्रभुरित्यन्तेन ग्रन्थेन परमस्थानस्य विष्णोरियत्तया प्रमाऽविषयत्वं शास्त्रैकबोध्यत्वं कालभेदक्षणमुहूर्तादिकृतपरिणामशून्यत्वञ्च प्रतिपाद्यते । अन्तस्तद्धर्मोपदेशादिति व्यास-

महाभारते च—

दिव्यं स्थानमजरं चाप्रमेयं दुर्विज्ञेयं चागमैर्गम्यमाद्यम् ।
गच्छ प्रभो रक्ष चास्मान् प्रपन्नान् कल्पे कल्पे जायमानः स्वमूर्त्या ॥

कालस्स पच्यते तत्र न कालस्तत्र वै प्रभुः ॥ इति ।

यस्य ब्रह्मणो रूपवत्त्वं सूत्रकारश्च वदति—"अन्तस्तद्धर्मोपदेशात्" इति । योऽसावादित्यमण्डलान्तर्वर्ती तप्तकार्त्तस्वरगिरिवरप्रभः सहस्रांशु-शतसहस्रकिरणो गम्भीराम्भःसमुद्भूतसुमृष्टनालरविकरविकसित-पुण्डरीकदलामलायतेक्षणः सुभ्रूललाटस्सुनासस्सुस्मिताधरविद्रुमः सुरुचिरकोमलगण्डः कम्बुग्रीवः समुन्नतांशविलम्बिचारुरूपदिव्यकर्ण-

---

सूत्रेण दिव्यपूर्वोक्तप्रत्यक्षाप्रत्यक्षसकलश्रुतिप्रतिपादितकल्याणगुणविशिष्टं परब्रह्म प्रतिपाद्यते । सूत्रस्य दिव्यविष्णुगुणवत्त्वपरत्वन्नेति न शङ्कनीयम्, "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इत्यादि व्याख्येयविषयत्वात् ।

योऽसाविति । अत्र यत्पदेन भाष्यकारस्य प्रत्यक्षाप्रत्यक्षश्रुतिप्रतिपादिताः सर्वे गुणा विवक्षिततयाऽभिमताः, इत्याह—योऽसावादित्यमण्डान्तर्वर्ती तप्तकार्तस्वर-गिरिवरप्रभः, बृहदारण्यके तैत्तिरीये च । मण्डलपदोपादानेनान्तरादित्य इत्यत्रादित्यपदस्य "दित्यदित्यादित्यपत्त्युत्तरपदाण्यः" इति सूत्रविहितादित्यप्रकृतिकण्यन्तादित्यशब्दस्य तत्सम्बन्धिमण्डलार्थकस्य ग्रहणम् । तप्तकार्तस्वरविशेषणं पश्यते, रुक्मवर्णमिति श्रुत्यानुगुण्यात् । "आदित्यवर्णं तमसः परस्तात्" इत्यादि वचनात् सहस्रांशु-शतकिरण इति विशेषणद्वयेनैतेनानुकूलजनभोग्यत्वं प्रतिकूलजनोद्वेगकारित्वं च विवक्षितम् । तच्च सत्तर्कवचनप्रमाणितं गम्भीराम्भोघटितविशेषणम्, तस्य "यथा कप्यासं पुण्डरीकमेवमक्षिणी" इति श्रुतिसिद्धान्तितार्थत्रयानुगुण्यात् । ते त्रयोऽर्थाः कं जलं पिबति कपिस्सूर्यः, तेनास्यते क्षिप्यते विकास्यते यत्तत् कप्यासं पुण्डरीकं तथाक्षिणी एकोऽर्थः । कं जलं पिबतीति कपिर्नालं तस्मिन्नास्ते कप्यासं जलस्थनालोपविष्टं यस्यापचितादधिकशोभाधानात् । अयमर्थः सुमृष्ट इति व्यक्तः, इत्थं द्वितीयोऽर्थः । कं जलं तत्र प्यास्ते इति अप्यास्तं कप्यासं भागुरिमतेनाकारलोपाद् गम्भीर-जलस्थमित्यर्थः, इति तृतीयोऽर्थः । एषु त्रिष्वर्थेषूपबृंहणानि सन्ति रामः कमल-पत्राक्ष इत्यादीनि, कपिः सूर्यस्तस्यासं मण्डलं पुण्डरीकं हृदयकमलं यथोपासनास्थानं तथाऽक्षिणीति व्याख्यानमयुक्तं उपासकस्योपासनास्थानमिति पदद्वयाध्याहार-

किसलयः पीनवृत्तायतभुजश्चारुतराताम्रकरतलानुरक्ताङ्गुलीभिरलङ्कृत-स्तनुमध्यो विशालवक्षस्स्थलः समविभक्तसर्वाङ्गोऽनिर्देश्यदिव्यरूप-संहननः स्निग्धवर्णः प्रबुद्धपुण्डरीकचारुचरणयुगलः स्वानुरूपपीताम्बर-धरोऽमलकिरीटकुण्डलहारकौस्तुभकेयूरकटकनूपुरोदरबन्धनाद्यपरिमिताश्चर्या-नन्तदिव्यभूषणः शङ्खचक्रगदासिशार्ङ्गश्रीवत्सवनमालालङ्कृतोऽ-नवधिकातिशयसौन्दर्याहृताशेषमनोदृष्टिवृत्तिर्लावण्यामृतपूरिताशेषचराचर-भूतजातोऽत्यद्भुताचिन्त्यनित्ययौवनपुष्पहाससुकुमारः पुण्यगन्धवासिता-नन्तदिगन्तरालस्त्रैलोक्याक्रमणप्रवृत्तगम्भीरभावः करुणानुरागमधुर-लोचनावलोकिताश्रितवर्गः पुरुषवरो दरीदृश्यते । स च निखिलजगदु-दयविभवलयलीलो निरस्तसमस्तहेयः समस्तकल्याणगुणनिधिः स्वेतर-समस्तवस्तुविलक्षणपरमात्मा परब्रह्म नारायण इत्यवगम्यते, "तद्धर्मो-

---

प्रसङ्गात्, विरोधाभावे शब्दाद्यभावे च प्राप्तसमानाधिकरणत्यागप्रसङ्गात् । पद्मकोशप्रतीकाशं हृदयं चाधोमुखमिति हृदयस्योपासनास्थानत्वेन पुण्डरीकस्य सदृशलक्षकत्वे गौणतापत्तेश्च, हिरण्यश्मश्रुर्हिरण्यकेश इत्यादि दिव्याङ्गवर्णन-प्रकरणविरोधाच्च । य एषोऽक्षिणि पुरुषो दृश्यत इत्युत्तराक्षिस्थानस्याभिधीयमान-त्वाच्च । 'य एष' इत्यादिश्रुतिभिरुपासनपराभिरेकस्मिन् दक्षिणेऽक्षिणि उपासन-स्थानतया विधानेन तत्र द्विवचनानुपपत्तेश्च । कपिर्मर्कटस्तस्यासं पृष्टं पश्चिमद्वारतटं तदसदृशं पुण्डरीकं तत्सदृशञ्चेत्यपि अपव्याख्यानम्, उपमाद्वयस्वीकारे स्वतः-प्राप्तसामानाधिकरण्यत्यागप्रसङ्गात्, उत्तमोपमया निर्वाहे हीनोपमया व्याख्या-नस्यानौचित्याच्च । कपिपृष्टसदृशपुण्डरीकसदृशमिति एकोपमायां तस्यातिगौणत्वाप-त्तेश्च । कप्यासमिव विकसितमित्यर्थस्यौचित्येऽपि तस्यार्थस्य रूढियोगान्यतरेणा-लाभाच्च । उक्तविशेषणे दलपदायतामलपदैः क्रमेण दलसाम्य-कमलाधिकगुणवत्त्व-कमल-गतदोषराहित्यानि विवक्ष्यन्ते । तदभिप्रेत्यैवाभियुक्तैरुच्यते—अदीर्घमप्रेमदुघं क्षणोज्ज्वल-मिति ।

न चोरमन्तःकरणस्य पश्यतामनुब्जमब्जन्तु कथं निदर्शनः ? वनाद्रिनाथस्य विशालयोर्दृशोरिति सुभ्रूललाटेति जितं ते पुण्डरीकाक्षेति स्तोत्रविशेषणम् । सुरुचिरेति भगवच्छास्त्रपुराणानुसारेण, कम्बुग्रीव इति कम्बुग्रीवो महाहनुरिति वचनात् कर्णकिस-लयादि जितन्तीति ज्ञेयं दिव्यरूपसंहनन इति, संश्लेषोचितसर्वाङ्गः रूपसंहननं लक्ष्मीति वचनात् । अङ्गानामभिरूपत्वे नोचितः संश्लेषः, स च सर्वाङ्गानामभिरूपत्व एव,

पदेशात्", "स एष सर्वेषां लोकानामीष्टे, सर्वेषां कामानां स एष सर्वेभ्यः पाप्मभ्य उदित" इत्यादि दर्शनात् । तस्यैते गुणाः "सर्वस्य वशी सर्वस्येशानः", "अपहतपाप्मा विजरः" इत्यादि 'सत्यसङ्कल्प' इत्यन्तं "विश्वतः परमं नित्यं विश्वं नारायणं हरिम्, पतिं विश्वस्यात्मेश्वरम्" इत्यादि वाक्यप्रतिपादिताः । वाक्यकारश्चैतत्सर्वमाह—हिरण्मयः पुरुषो दृश्यत इति प्राज्ञः सर्वान्तरः स्याल्लोककामेशोपदेशात् तथोदयात् पाप्मनामित्यादिना । तस्य च रूपस्यानित्यतादि वाक्यकारेणैव प्रतिषिद्धम्—'स्याद्रूपं कृतकमनुग्रहार्थं तच्चेतसामैश्वर्यात्' इति ।

---

प्रवुद्धचेति तत्पादकमलादिति बलात् । स्वाङ्गरूपपीताम्बरेति, तस्य महारजतं वास इति श्रुतेः, अमलकिरीटादि, ध्येयः सदा सवितृमण्डलमध्यवर्तीत्यानुगुण्यात् । अमलपदं प्राकृतत्वनिरासाय, सौन्दर्यमवयवशोभा, तत्रानवधिकाशयत्वं दृष्टिचित्तापहारित्वम् । यौवने अत्यद्भुतत्वं युवाकुमार इति श्रुतिसिद्धं लावण्यं समुदायशोभापुण्यहास इति सौकुमार्यं सुवेशतामिति बलात्, पुण्यगन्ध इति सर्वगन्ध इत्यादि वचनात् त्रैलोक्येति समुद्र इत्यादितः । इत्थं गुणविशिष्टपुरुषोऽतिशयेन पौनःपुन्येन दृश्यते, एवं य एषोऽन्तरादित्ये इत्यादि वाक्यार्थ उपपादितः ।

अथ निरुक्तश्रुतिविषयस्यान्तस्तद्धर्मोपदेशादित्यस्य पूर्वखण्डार्थमाह—स च पूर्वोक्तश्रुतिबोधितगुणविशिष्टो निखिलजगदुत्पत्तिरक्षणलयलील इति आनन्दवल्लीप्रोक्त-कारणत्वं य एषोऽन्तरादित्य इत्यत्रादित्यमण्डलगतस्य प्रोक्तं यत् कारणत्वं तद्-ब्रह्मात्मनारायणसामान्यविशेषशब्दत्वेन पशुछागन्यायेन नारायणे बोध्यम् । स च निरस्तनिखिलहेयः समस्तकल्याणगुणनिधिः, अन्तस्तद्धर्मोपदेशादिति सूत्रात् । "स एष सर्वेषामिति", "स एष सर्वेभ्यः पाप्मभ्य उदित" इत्यादि वचनाद् निरस्त-निखिलेति पाप्मभ्य उदित इत्यस्यार्थो विवक्षितः । तद्धर्मोपदेशादित्यस्यायमर्थः—स लोकेषिता सर्वहेयप्रतिभटो दाता नारायणस्तस्य धर्मा गुणा विशेषणभूता ये सर्वस्य वशी, अपहतपाप्मा विजर इत्यादि श्रुतिरादिर्यस्य तत् सत्यसङ्कल्पमित्यन्तं श्रुतिप्रकरणं विश्वतः परमं नित्यं विश्वं नारायणं हरिं पतिं विश्वस्यात्मेश्वरमित्यादिश्रुतिप्रात-पादिताः, सर्ववशीत्वादयस्तेषामुपदेशाद् निरुक्तश्रुतिप्रतिपादनात् । वाक्यकारो बौधायनोऽप्याह—पुरुषस्य नारायणस्य हिरण्मयत्वविपश्चित्वादिगुणजातम् । हिरण्मयः पुरुष इत्यादि तथोदयात् पाप्मनामित्यन्तवचनादिति । आदित्ये वर्ण्यमानस्य पुरुषस्य रूपवत्वश्रवणाज्जीवमाशंक्याप्राकृतत्वेन रूपस्य समाहितमन्तरिति सूत्रेण ।

वाक्यकारश्चैतत्सर्वमाह—हिरण्मयः पुरुषो दृश्यत इति । उपासितुरनुग्रहार्थः परमपुरुषस्य रूपसंग्रह इति पूर्वपक्षं कृत्वा रूपं वातीन्द्रियमन्तःकरणप्रत्यक्षं तन्निर्देशादिति । यथा ज्ञानादयः परस्य ब्रह्मणः स्वरूपतया निर्देशात् स्वरूपभूतगुणाः, तथेदमपि रूपं श्रुत्या स्वरूपतया निर्देशात् स्वरूपभूतमित्यर्थः । भाष्यकारेणैतद्व्याख्यातम् । अञ्जसैव विश्वसृजोरूपं तत्तु न चक्षुषा ग्राह्यं मनसा त्वकलुषेण साधनान्तरवता गृह्यते, न चक्षुषा गृह्यते, नापि वाचा, मनसा तु विशुद्धेनेति श्रुतेः। न ह्यरूपाया देवताया रूपमुपदिश्यते । यथाभूतवादि हि शास्त्रं महारजतं वासः, वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तादिति प्रकरणान्तरनिर्देशाच्च साक्षिण इत्यादिना । हिरण्मय इति रूपसामान्या-

---

वाक्यकारेणापि स्याद्रूपं कृतकं वर्ण्यमानमुपासकानुग्रहार्थमिति पूर्वपक्षपूर्वकं रूपमतीन्द्रियमन्तःकरणप्रत्यक्षं तन्निर्देशादिति प्रतिवचनेन ज्ञानादिवद् रूपस्यापि स्वरूपनिरूपकत्वानित्यत्वराहित्यस्थापनात्, भाष्यकारैर्द्रविडाचार्यैस्तथा व्याख्यातत्वात् । तथा हि अञ्जसैव विश्वसृजो रूपं न चक्षुषा ग्राह्यम्, मनसा तु साधनान्तरवता विशुद्धेन मनसा ध्यानात्मकभक्त्येत्यर्थ इत्यादि । न चक्षुषा गृह्यते, नापि वाचा, मनसा तु शुद्धेनेति श्रुतेः। यथार्थवादित्वाच्छास्त्रस्यारूपाया देवतायाः कथं रूपवत्वमिति न शङ्क्यम् । एवञ्च महारजतं वासः, आदित्यवर्णमिति च, महान्तं पुरुषमिति च यथार्थवर्णनम् । हिरण्मये विकारे मयण्न शङ्क्यः, अनारभ्यत्वादात्मनो दिव्यविग्रहविशिष्टस्यानुत्पन्नत्वात् । अञ्जसैव विश्वसृजो रूपमित्यादिवचनात् । एवञ्च यथा ज्ञानादिगुणविशिष्टं ब्रह्म श्रुतिसिद्धम्, तथादित्यवर्णं तमसः परस्तादित्यादि श्रुतिसिद्धकल्याणतमविग्रहविशिष्टमपीति ब्रह्म नारायण इति ज्ञायते । तथा "अस्येशाना ह्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे, सदा पश्यन्ति सूरयः, तमसः परस्तात्, क्षयन्तमस्य रजसः पराके" इत्यादि श्रुतिसिद्धम् । पत्नीनित्यजीवपरमवैकुण्ठस्थानादिपरिजनस्थानादयो नित्याः कल्याणरूपा बोध्याः, वेदादिशास्त्राणां यथार्थवादित्वात् । द्रविडाचार्योऽप्याह—यथा भूतवादि हि शास्त्रम् ।

एतदुक्तं भवति—यथा सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्या ब्रह्म समस्तहेयप्रत्यनीकत्वादि सकलेतरविलक्षणम्, प्रकृतिप्राकृतविलक्षणं स्वीक्रियते, शास्त्रप्रमाणबलात्,

च्चन्द्रमुखवत्, न मयडत्र विकारमादाय प्रयुज्यते, अनारभ्यत्वादात्मन इत्यन्तेन यथा ज्ञानादिकल्याणगुणानन्त्यनिर्देशादपरिमितकल्याणगुण-विशिष्टपरं ब्रह्मेति अवगम्यते। एवमादित्यवर्णं पुरुषमित्यादि निर्देशात् स्वाभिमतस्वानुरूपकल्याणतमरूपः परब्रह्मभूतः पुरुषोत्तमो नारायण इति ज्ञायते। तथाऽस्येशाना, ह्रीश्च ते लक्ष्मीश्च पत्न्यौ, सदा पश्यन्ति सूरयः, तमसः परस्तात्, क्षयन्तमस्य रजसः पराके इत्यादिना पत्नीपरिजन-स्थानादीनां निर्देशादेव तथैव सन्तीत्यवगम्यते। यथाह भाष्यकारः— यथाभूतवादि हि शास्त्रमिति।

एतदुक्तं भवति—यथा सत्यं ज्ञानमनन्तं ब्रह्मेति निर्देशात् परमात्म-स्वरूपं समस्तहेयप्रत्यनीकानवधिकानन्दैकतानतयाऽपरिच्छेद्यतया च सकलेतरविलक्षणम्, यथा यः सर्वज्ञः स सर्ववित्, पराऽस्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च, तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीत्यादिनिर्देशान्निरतिशयासंख्येयाश्च गुणाः सकले-तरविलक्षणाः, तथाऽऽदित्यवर्णमित्यादिनिर्देशाद् रूपपरिजनस्थानादयश्च सकलेतरविलक्षणाः स्वासाधारणा अनिर्देश्यस्वरूपस्वभावा इति।

---

तथा प्रमाणत्वाविशेषात्। "यः सर्वज्ञः, स सर्ववित्", "परास्य शक्तिर्विविधैव श्रूयते" इत्यादि "तमेव भान्तमनुभाति सर्वम्"इत्यादि श्रुतिसिद्धाः, समस्तेतरविलक्षणाः सर्वज्ञ-त्वादयो गुणा निरवधिकासंख्येयानतिशया अपि स्वीकर्तव्याः, तथा प्रमाणत्वाविशेषात्। "आदित्यवर्णं तमसः परस्तात्", "श्रीश्च ते लक्ष्मीश्च" इत्यादि, "सदा पश्यन्ति सूरयः" इत्यादि श्रुतिसिद्धाः कल्याणतमाः, समस्तेतरधर्मविलक्षणाः, भगवदभिमताः, भगवत्स्वरूपानुरूपाः पत्नीस्थानपरिजनादयः कथं प्रमाणपरतन्त्रैर्नाङ्गीक्रियन्ते। अकामेनाङ्गीकर्तव्या एवान्यथा शास्त्रप्रमाणवादित्वगौरवमपहाय वैदिकगोष्ठीं तिलाञ्जलीकृत्य, वाह्यकुलमेव कथं नालङ्क्रियते। रूपस्य प्रमाणसिद्धस्य भोग्यतमत्वे स्वरूपे निरतिशयभोग्यताविरहो न शङ्क्यः, स्वरूपस्य भोग्यत्वमसम्बन्धिनो भोग्य-तमत्वावहमिति स्थितेः।

वेदाः प्रमाणञ्चेद् विध्यर्थवादमन्त्रगतं सर्वमपूर्वमविरुद्धमर्थजातं यथावस्थितमेव बोधयन्ति । प्रामाण्यञ्च—"वेदानाम् औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इत्युक्तम् । यथाग्निजलादीनामौष्ण्यादिशक्तियोगः, यथा च चक्षुरादीनामिन्द्रियाणां बुद्धिविशेषजननशक्तिः स्वाभाविकी, तथा शब्दस्यापि बोधनशक्तिः स्वाभाविकी । न च हस्तचेष्टादिवत् सङ्केतमूलं शब्दस्य बोधकत्वमिति वक्तुं युक्तम्, अनाद्यनुसन्धानाविच्छेदेऽपि संकेतयितृपुरुषाज्ञानात् । यानि संकेतमूलानि, तानि सर्वाणि साक्षाद्वा परम्परया वा ज्ञायन्ते । न च देवदत्तादिशब्दवत् कल्पयितुं युक्तम् । तेषु च साक्षाद्वा परम्परया वा संकेतो ज्ञायते । गवादिशब्दानां तु अनाद्यनुसन्धानाविच्छेदेऽपि संकेताज्ञानादेव बोधकत्वशक्तिः स्वाभाविकी । अतोऽग्न्यादीनां दाहकत्वादिशक्तिवदिन्द्रियाणां बोधकत्वशक्तिवच्च शब्दस्यापि बोधकत्वशक्तिरादरणीया ।

---

अर्थवादस्य स्वार्थे तात्पर्याभावात् सत्यं ज्ञानमित्यादीनां स्वरूपमेवासिद्धम्, किं गुणस्थानपरिजनकथया ? इति पूर्वं मीमांसकाशङ्कायामाह—वेदाः प्रमाणञ्चेदित्यादि । वेदा विध्यर्थवादमन्त्ररूपाः । पठ्यमानाः, अपठ्यमानाश्च । यदि प्रमाणप्रमात्मकज्ञानजनकाश्चेत्, सर्वभागा अपूर्वमविरुद्धं सर्वं यथावस्थितमेव वदन्ति, न बाधितम् । यजमाने प्रस्तरत्वम्, प्रमाणान्तरसिद्धं वा । चोदनासूत्रेऽवधारणद्वयमस्ति । चोदनैव प्रमाणं प्रमाणमेव चोदनेति । तत्र प्रमाणमेव चोदनेति विशेषणसंगतेनैवकारेण चोदनावाक्ये प्रामाण्यायोगव्यवच्छेदप्रतीतेश्चोदनातिरिक्तप्रामाण्यनिषेधाभावेनार्थवादमन्त्रयोरपि प्रामाण्यं प्रतितिष्ठति, तन्निरूपयति—प्रामाण्यञ्चेत्यादिना । वेदानां प्रामाण्यं प्रमाजनकत्वम्, शब्दस्यौत्पत्तिकः सम्बन्धः स्वाभाविकसम्बन्धो नित्यसम्बन्ध इति यावत् । औत्पत्तिकत्वं सत्ताप्रयुक्तं नित्यमिति । तथा हि अग्निजलयोर्यथोष्णत्वशीतत्वयोगः स्वाभाविकः, चक्षुरादीन्द्रियाणां प्रत्यक्षज्ञानजनकत्वशक्तियोगः स्वाभाविकः, तथा शब्दे बोधकत्वशक्तिः स्वाभाविकी नित्या ।

न च यथा हस्तादिगतचेष्टायामनया चेष्टया अयमर्थो बोध्य इति संकेतसहकृतायां बोधकत्वम्, तथा शब्देऽपि निरुक्तसंकेतसापेक्षबोधजनकत्वमिति संकेतजन्यत्वान्न स्वाभाविकमिति वाच्यम् । संकेतेन संकेतयितृपुरुषज्ञानसचिवेन चेष्टायां बोधकत्वम् । शब्दे संकेतयितृपुरुषज्ञानं विना बोधकत्वदर्शनेन तस्य सङ्केतमूलकत्वासम्भवात् । शब्दे संकेतयितृपुरुषज्ञानाभावः शब्दोपस्थित्यभावनिबन्धन इति न, शब्दादर्थोपस्थिते-

ननु च इन्द्रियवच्छब्दस्यापि बोधकत्वं स्वाभाविकं चेत्, सम्बन्धग्रहणं बोधकत्वाय किमित्यपेक्षते। लिङ्गवदित्युच्यते। यथा ज्ञातसम्बन्धनियमं धूमादि अग्न्यादिविज्ञानजनकम्, तथाज्ञातसम्बन्धनियमशब्दोऽप्यर्थविशेषबुद्धिजनकः। एवं तर्हि शब्दोऽप्यर्थविशेषस्य लिङ्गमित्यनुमानमेव स्यात्, मैवम्, शब्दार्थयोः सम्बन्धी बोध्यबोधकभाव एव। धूमादीनां तु सम्बन्धान्तरमिति तस्य सम्बन्धस्य ज्ञानद्वारेण बुद्धिजनकत्वमिति विशेषः। एवं गृहीतसम्बन्धस्य बोधकत्वदर्शनादनाद्यनुसन्धानाविच्छेदेऽपि संकेताज्ञानाद्बोधकत्वशक्तिरेवेति निश्चीयते।

---

विच्छेदाभावेन संकेतयितृपुरुषाज्ञानस्य तत्प्रयोज्यत्वायोगात्। तस्मात् संकेतयितृपुरुषाज्ञानात् संकेतो न शब्दे बोधकत्वस्य जनकः। यानि संकेतमूलकानि बोधकत्वानि, तत्र साक्षात्परम्परया वा संकेतयितृपुरुषज्ञानं तिष्ठत्येव। देवदत्तादिशब्देषु पितृसङ्केतेन बोधकत्वं तु साक्षात्परम्परया पुरुषज्ञानात्। तेन तत्र संकेतेन बोधो लक्षणया संकेतोपयोगश्च स्वशक्तसंकेतविषयत्वरूपशक्यसम्बन्धावगतये। स्वमाशीर्विषयदेवदानकर्म, तत्र शक्तं देवदत्तपदम्। तत्संकेतविषयः पिण्डः। गवादिशब्दानामनुसन्धानाविच्छेदेऽपि गवाद्यर्थबोधपरम्पराभङ्गाभावेऽपि संकेतयितृपुरुषाज्ञानान्न तन्मूलकत्वम्। संकेतसापेक्षबोधस्थले बोधापरिच्छेदे साक्षात्परम्परया वा संकेतयितृपुरुषोऽनुसन्धीयत एव। गवादौ बोधाविच्छेदेऽपि तथाऽदर्शनादिति भावः। तस्मादग्न्यादि-चक्षुरादि-दाहकत्वादि-प्रत्यक्षजनकत्वादिशक्तिवत् शब्देषु बोधजनकत्वस्य स्वाभाविकत्वमौत्पत्तिकत्वं नित्यत्वम्। औत्पत्तिकश्च शब्दस्यार्थेन सम्बन्ध इति जैमिनिसूत्राद्बोध्यम्।

ननु शब्दे स्वाभाविकं चेद्बोधकत्वम्, किं सम्बन्धग्रहणापेक्षयेति चेत्, न, यथा धूमस्य वह्निज्ञानजनकत्वे स्वाभाविकेऽपि वह्निव्याप्यत्वेन ज्ञानमपेक्षितम्, तथा शब्दस्य बोधकत्वे स्वाभविकेऽपि "अस्य शब्दस्यायमर्थो बोध्यः" इति बोध्यबोधकसम्बन्धज्ञानस्यापेक्षणात्। इत्थं चक्षुरादीनामपि बोधकत्वे आलोकादिसम्बन्धापेक्षेऽपि न सम्बन्धग्रहणापेक्षतया स्वाभाविकत्वहानिः। न चैवं शब्दस्य धूमवत् सम्बन्धग्रहणसापेक्षबोधजनकत्वाविशेषादनुमानत्वमेव शब्दस्याङ्गीक्रियताम्, किं पृथक् प्रामाण्येनेति वाच्यम्। धूमस्य जन्यजनकभावमूलकव्याप्यव्यापकसम्बन्धग्रहसापेक्षबोधजनकत्वम्। शब्दस्य तन्निरपेक्षबोध्यबोधकभावसम्बन्धज्ञानसापेक्षतया बोधजनकत्वेन भेदात्। इत्थं गृहीतबोध्यबोधकभावसम्बन्धस्य शब्दस्य बोधकत्वदर्शनादनादि-

एवं बोधकानां पदसंघातानां संसर्गविशेषबोधकत्वेन वाक्यशब्दाभिधेयानामुच्चारणक्रमो यत्र पुरुषबुद्धिपूर्वकः, ते पौरुषेयाः शब्दा इत्युच्यन्ते। यत्र तु तदुच्चारणक्रमः पूर्वपूर्वोच्चारणक्रमजनितसंस्कारपूर्वकः, सर्वदाऽपौरुषेयास्ते च वेदा इत्युच्यन्ते। एतदेव वेदानामपौरुषेयत्वम्, नित्यत्वञ्च यत्पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्यमाणत्वम्। ते चानुपूर्वीविशेषेण संस्थिता अक्षरराशयो वेदा ऋग्यजुःसामाथर्वभेदभिन्ना अनन्तशाखा वर्तन्ते। ते च विध्यर्थवादमन्त्ररूपा वेदाः परब्रह्मभूतनारायणस्वरूपं तदाराधनप्रकारम्, आराधितात्फलविशेषञ्च बोधयन्ति। परमपुरुषवत् तत्स्वरूपतदाराधनतत्फलज्ञापकवेदाख्यशब्दजातं नित्यमेव, वेदानामनन्तत्वात्, दुरवगाहत्वाच्च। परमपुरुषनियुक्ताः

---

शब्दार्थोपस्थितिविच्छेदविरहेऽपि संकेतयितृपुरुषाज्ञानात् संकेतज्ञानाभावाद् बोधकत्वशक्तिः शब्दानां स्वाभाविकी।

लौकिकवैदिकशब्दानां स्वाभाविकबोधकत्वशक्त्यविशेषेऽपि तेषां परस्परविभागश्चेत्थम्—लौकिकवैदिकवाक्ययोः संसर्गविशेषबोधकत्वेन प्रामाण्यम्, पदार्थोपस्थितिस्तु तत्पदार्थसम्बन्धग्रहोत्थसंस्कारेणोद्बुद्धेनेति शब्दानामुद्बोधकेष्वन्तर्भावः स्यात्। संसर्गविशेषास्तु निरन्तरं नूतना एव भवन्तीति तेषामपूर्वत्वात्। पूर्वमनुभवाभावेन न संस्कारादवगतिः, स्मृतिरूपेति शब्दानां स्वतन्त्रप्रामाण्यम्। तत्र यत्र वाक्यघटकपदानामुच्चारणक्रमः, पुरुषबुद्धिक्रमप्रयुक्ततत्पदसमुदायो लौकिकं वाक्यम्। यत्र तु वाक्यघटकपदानामुच्चारणक्रमो गुरूच्चारणक्रमजनितसंस्कारप्रयुक्तस्तत्पदसमूहो वैदिकवाक्यम्। ते वैदिकाः शब्दा अपौरुषेया उच्यन्ते। एतदेव वेदानामपौरुषेयत्वं नित्यत्वम्। पूर्वपूर्वोच्चारयितृपुरुषकृतोच्चारणक्रमानुभवजनितसंस्कारेणानुभूतं तं क्रमं स्मृत्वोच्चार्यमाणत्वम्, तेनैव क्रमेण तदपौरुषेयत्वम्, पुरुषबुद्धिमूलकत्वाभावात्। वर्णनित्यत्वं पदनित्यत्वं वा नापौरुषेयत्वप्रयोजकम्, अन्यथा कालिव्यासादिग्रन्थानामपि अपौरुषेयत्वापत्तेः। ये यथा पूर्वपूर्वोच्चारणक्रमं संस्कारकृतस्मरणेनोच्चारितास्ते चानुपूर्वीविशेषेण संस्थिता अक्षरराशयो वेदाः, ऋगादिभेदभिन्ना अनन्तशाखा वर्तन्ते। ते च न केवलविधिरूपाः; अपि तु विध्यर्थवादमन्त्ररूपाः। वेदाः परब्रह्म नारायणं नारायणदेवविशेषरूपेण निर्णीतं ब्रह्म सिद्धपरवाक्यरूपेण आराधनप्रकारं विधिवाक्यरूपेण आराधिताद् नारायणात् फलविशेषं च बोधयन्ति।

परमर्षयोऽन्ये कल्पे निखिलजगदुपकारार्थं वेदार्थं स्मृत्वा विध्यर्थवाद-मन्त्रमूलानि धर्मशास्त्राणि, इतिहासपुराणानि च चक्रुः। लौकिकाश्च शब्दा वेदराशेरुद्धृत्यैव तत्तदर्थविशेषनामतया पूर्ववत्प्रयुक्ताः पारम्पर्येण प्रयुज्यन्ते। ननु वैदिका एव सर्वे वाचकाः शब्दाश्चेद् छन्दस्येव भाषायामेव लक्षणभेदः कथमुपपद्यते। उच्यते—तेषामेव शब्दानां तस्यामेवानुपूर्व्यां वर्तमानानां तथैव प्रयोगोऽन्यत्र प्रयुज्यमानानामन्यथेति न कश्चिद्दोषः।

एवमितिहासपुराणधर्मशास्त्रोपबृंहितसाङ्गवेदवेद्यः परब्रह्मभूतो नारायणो निखिलहेयप्रत्यनीकः, सकलेतरविलक्षणोऽपरिच्छिन्नज्ञानानन्दैकस्वरूपः, स्वाभाविकानवधिकातिशयासंख्येयकल्याणगुणगणाकरः, स्वसङ्कल्पानुविधायि स्वरूपस्थितिप्रवृत्तिभेदचिदचिद्वस्तुजातोऽपरिच्छेद्यस्वरूपस्वभावानन्तमहाविभूतिर्नानाविधानन्तचेतनाचेतनात्मकप्रपञ्चलीलोपकरण इति प्रतिपादितम्। 'सर्वं खल्विदं ब्रह्म' 'ऐतदात्म्यमिदं सर्वं तत्त्वमसि श्वेतकेतो',

---

ननु सिद्धपरवाक्यमर्थात् पश्चात्तनम्। कथं नित्यत्वमिति न शङ्क्यम्। ब्रह्मस्वरूपवत् तद्रूपतदाराधनतत्फलज्ञापकवेदाख्यशब्दजातं नित्यमेव पूर्वं वेदानामनन्तत्वादुपबृंहणापेक्षा, अथ दुरवगाहत्वादुपबृंहणापेक्षा, तदाह—परमपुरुषनियुक्ताः परमविदो व्यासवाल्मीक्यादयः। तौ तु मेधाविनौ दृष्ट्वेति परमपुरुषनियुक्तत्वं तेषां ते कल्पे कल्पे विधिमूलकानि धर्मशास्त्राणि, मन्त्रार्थवादमूलानीतिहासपुराणादीनि चक्रुः। वेदराशेरुद्धृत्यैव लौकिकशब्दास्तत्तदर्थेषु प्रयुक्ताः पारम्पर्येणोपादानात् प्रयुज्यन्ते।

ननु यदि वैदिका एव सर्वे शब्दाः, तदाऽयं भाषायामेव छन्दस्येवेति "मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः" इति हि ग्रहोर्भश्छन्दसीति लक्षणभेदः कथमिति वाच्यम्, तेषामेव वैदिकशब्दानां तथानुपूर्व्या वर्तमानतायां वैदिकाः, अन्यथा लौकिका इत्याशयात्।

प्रकरणेऽस्मिन् विस्तरेण प्रतिपादितानामर्थानां सुग्रहत्वायोक्तार्थजातं संग्रहेणानुक्रमते। सर्वमित्यादिना परब्रह्मनारायणशब्दौ सामान्यविशेषपरौ मनुष्यब्राह्मणाविव मनुष्यदेवाविव विभिन्नावित्यभिप्रेत्योक्तम्—**ब्रह्म नारायण** इति। निखिलहेयप्रत्यनीकमित्यादिनोभयलिङ्गत्वमुच्यते। निखिलहेयप्रत्यनीकत्वं कल्याणगुणैकतानत्वरूपम्, स्वसङ्कल्पादिवस्तुजातम्, तेन विभूतिमत्त्वमुच्यते। अपरिच्छेद्यादिना नित्यविभूतिमत्त्वम्। अपरिच्छेद्यत्वं न मानराहित्यमपि तु इयत्ताराहित्यम्। औज्ज्वल्यादि-

एनमेके वदन्त्यग्निं मरुतोऽन्ये प्रजापतिम् ।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ।।

ज्योतींषि शुक्लानि च यानि लोके त्रयो लोका लोकपालास्त्रयी च ।
त्रयोऽग्नयश्चाहुतयश्च पञ्च सर्वे देवा देवकीपुत्र एव ।।

त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः परन्तपः ।
ऋतधामा वसुः पूर्वो वसूनां त्वं प्रजापतिः ।।
जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम् ।
अग्निः कोपः प्रसादस्ते सोमः श्रीवत्सलक्षणः ।।

ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ।
नद्यस्समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ! ।।

इत्यादि सामानाधिकरण्यप्रयोगेषु सर्वैः शब्दैः सर्वशरीरतया सर्वप्रकारं ब्रह्मैवाभिधीयत इति चोक्तम् । सत्यसङ्कल्पं परं ब्रह्म स्वयमेव बहुप्रकारं स्यामिति । सङ्कल्प्याचित्समष्टिरूपमहाभूतसूक्ष्मवस्तुभोक्तृवर्गसमूहञ्च स्वस्मिन् प्रलीनं स्वयमेव विभज्य तस्माद् भूतसूक्ष्माद्वस्तुनो महाभूतानि सृष्ट्वा तेषु च भोक्तृवर्गमात्मतया प्रवेश्य तैश्चिदधिष्ठितैर्महाभूतैरन्योन्यसंसृष्टैः कृत्स्नं जगद्विधाय स्वयमपि सर्वस्यात्मतया प्रविश्य परमात्मत्वेनावस्थितं सर्वशरीरं बहुप्रकारमवतिष्ठते । यदिदं महाभूत-

---

गुणोत्कर्षश्चापि तेन सूच्यते। महाविभूतिरिति भोग्यविभूतिरभिप्रेता। नानाविधेत्यादिना लीलाविभूतिरभिप्रेता।

इत्थं प्रकारगुणविशिष्टो नारायणः प्रतिपादितः। सर्वं खल्विदं ब्रह्म, ऐतदात्म्यमिदं सर्वमित्यादिना सर्वेदं मत्वाग्निमरुदिन्द्रप्राणज्योतिस्त्रिलोक-लोकपाल-वेदत्रयी-त्र्यग्नि-पञ्चाहुति-सर्वदेव-यज्ञ-वषट्कारादिपदसामानाधिकरण्येन युष्मदादि-मरुदादि-शरीरकब्रह्म नारायणो देवकीपुत्र उच्यते। सर्वस्य जगतः शरीरत्वबोधनं विना सर्वं खल्विति, शरीरिशरीरभावकृतसामानाधिकरण्यं न स्यादिति पूर्वं पठितत्वाच्च, जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलमिति वचनमुपादायोक्तम्।

ननु कारणावस्थायां ब्रह्मण एकत्वावधारणाद् न शरीरशरीरिभावकृतसामानाधिकरण्यं सम्भवति; किन्तु स्वरूपत एवात आह—सत्यसङ्कल्पमिति। सत्यसङ्कल्पत्वं

सूक्ष्मं वस्तु तदेव प्रकृतिशब्देनाभिधीयते, भोक्तृवर्गसमूह एव पुरुषशब्देनोच्यते । तौ च प्रकृतिपुरुषौ परमात्मशरीरतया परमात्मप्रकारभूतौ, तत्प्रकारः परमात्मैव प्रकृतिपुरुषशब्दाभिधेयः । सोऽकामयत, बहु स्यां प्रजायेयेति । तत्सृष्ट्वा तदेवानुप्राविशत । तदनुप्रविश्य सच्च त्यच्चाभवत् । निरुक्तश्चानिरुक्तश्च निलयनश्चानिलयनम्, विज्ञानश्चाविज्ञानम्, सत्यञ्चानृतञ्च सत्यमभवदिति पूर्वोक्तं सर्वमनया श्रुत्या व्यक्तम् ।

ब्रह्मप्राप्त्युपायश्च शास्त्राधिगततत्त्वज्ञानपूर्वकस्वकर्मानुगृहीतभक्तिनिष्ठा साध्यानवधिकातिशयप्रियविशदतमप्रत्यक्षतापन्नानुध्यानरूपपरभक्तिरेवेत्युक्तम् । भक्तिशब्दश्च प्रीतिविशेषे वर्तते । प्रीतिश्च ज्ञानविशेष एव । ननु च सुखं प्रीतिरित्यनर्थान्तरम् । सुखञ्च ज्ञानविशेषसाध्यम् । पदार्थान्तरमिति हि लौकिकाः । येन ज्ञानविशेषेण तत्साध्यमित्युच्यते, स एष ज्ञानविशेषः सुखम् ।

---

नाम स्वेच्छाधीनसमस्तलीलानित्यविभूतिमत्त्वम्, न तु स्वसङ्कल्पायत्तजगत्-स्वर्ग-नरकादिरूपत्वम्, स्वस्यापुरुषार्थस्येच्छाविषयत्वाभावात् । अतो जगद्विलक्षणम्, शरीरं तु कारणावस्थायामपि सूक्ष्मचिदचिद्रूपमस्त्येव इत्याह—सत्यसङ्कल्पब्रह्मेत्यादिना । बहु इति बहुप्रकारमित्याह, अचित्समष्टिः प्रकृतिपुरुषो जीवसमूहो भोक्तृवर्गः । इमौ प्रलये ब्रह्मणि लीनौ, अविभक्तनामरूपौ, प्रलीनौ स्वयं विभज्य भूतसूक्ष्मात्प्रकृतेर्महाभूतानि पृथ्व्यादीनि सृष्ट्वा तेषु आत्मतया भोक्तृवर्गं प्रवेश्य चित्संसृष्टैर्भूतैरन्योन्यसंसृष्टैः पञ्चीकरणप्रक्रियया परस्परमिलितैः सर्वं जगद्विधाय स्वयमपि सर्वस्यात्मतया प्रविश्य परमात्मत्वेनावस्थितं सर्वप्रकारं ब्रह्मावतिष्ठते । कृत्स्नं जगदिति । ब्रह्माण्डान्तर्वर्ति भोक्तृभोग्यभोगोपकरणदेवमनुष्यादि विवक्षितम् । महाभूतसूक्ष्मं यद्यपि पञ्चतन्मात्रा; किन्तु अत्र प्रकृतिः । पुरुषो यद्यपि एकैकव्यक्तिपर्यवसायी; किन्त्वत्र जीवसमूहः ।

सिद्धवस्तुसंग्रहं कृत्वोपायविषयवक्तव्यमाह – ब्रह्मप्राप्त्युपायश्चेति । ब्रह्मप्राप्त्युपायश्च शास्त्राधिगतं तत्त्वम्, ब्रह्मजीवादि तज्ज्ञानं यथार्थज्ञानं तदुत्तरभाविनी वर्णाश्रमविहितकर्मानुष्ठानोपकृता या भक्तिर्नाम कीर्तनार्चनादिसचिवगुणविशिष्टदेवध्यानाभ्यासः । आप्रयाणम् । तेन साध्याया अवधिरहितं सापेक्षातिशयरहितं प्रियस्योपास्यदेवस्य नारायणस्य यद्विशदतमं संशयविपर्याससहिष्णुप्रत्यक्षं तत्तामवाप्तं यदनुध्यानं प्रीतिरूपा ध्रुवानुस्मृतिः, तैलधारावदविच्छिन्नस्मृतिसन्तानरूपा भक्ति-

एतदुक्तं भवति—विषयज्ञानानि सुखदुःखमध्यस्थसाधारणानि। तानि च विषयाधीनविशेषाणि तथा भवन्ति, येन विषयविशेषेण विशेषितं ज्ञानं सुखस्य जनकमित्यभिमतम्। तद्विषयं ज्ञानमेव सुखम्। तदतिरिक्तपदार्थान्तरं नोपलभ्यते, तेनैव सुखित्वव्यवहारोपपत्तेश्च। एवंविधसुखरूपज्ञानस्य विशेषकत्वं ब्रह्मव्यतिरिक्तस्य वस्तुनः सातिशयमस्थिरञ्च। ब्रह्मणस्त्वनवधिकातिशयं स्थिरञ्चेति। आनन्दो ब्रह्मेत्युच्यते। विषयातत्त्वाद् ज्ञानस्य सुखरूपतायां ब्रह्मैव सुखम्। तदिदमाह—"रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति" इति ब्रह्मैव सुखमिति। ब्रह्म लब्ध्वा सुखी भवतीत्यर्थः। परमपुरुषः स्वेनैव स्वयमनवधिकातिशयसुखः सन् परस्यापि सुखं भवति, सुखरूपत्वाविशेषात्। ब्रह्म यस्य ज्ञानविषयः, स सुखी भवतीत्यर्थः। तदेवम्—परस्य ब्रह्मणोऽनवधिकातिशयासंख्येयकल्याणगुणगणाकरस्य निरवद्यस्यानन्तमहाविभूतेरनवधि-

---

रेव। सैव पराभक्तिरुच्यते पूर्वमुक्ता। अस्यां प्रपत्तिरङ्गभूता, स्वतन्त्रा प्रपत्तिरन्या। प्रीतिश्च प्रियस्य वस्तुनो ज्ञानमेव, न तु प्रियवस्तुज्ञानेनोत्पन्नम्। प्रीतिरूपं सुखमन्यत्, तार्किकवत्। येन ज्ञानविशेषसाध्यं सुखमुच्यते तार्किकेण, स एव ज्ञानविशेषः सुखम्।

ननु एतदनुपपन्नम्—सुखसाधकं ज्ञानमेव सुखमिति। नहि दण्डघटयोरेकत्वं ब्रवीति कश्चित्, अत आह—एतदुक्तं भवतीति। विशदज्ञानानि अनुकूलप्रतिकूलानुभयरूपाणि। विषयज्ञानानि अनुकूलादिविषयवैलक्षण्येन विशेषरूपवन्ति। येन विषयेण विशेषेण विशेषितं विशेषावगाहि ज्ञानं सुखस्य जनकं तवाभिमतम्, तद्विषयकं ज्ञानमेव सुखं तदतिरेकि, तदतिरिक्तं ज्ञानातिरिक्तं न सुखं पदार्थान्तरम्। अन्यपदार्थः सुखजनकत्वेनाभिमतेन ज्ञानेनैव, अहं सुखीति व्यवहारोपपत्तेः, अतिरिक्तस्यानुपलब्धिपराहतत्वात्। प्रियविषयकज्ञानस्य विशेषकत्वं विशेषरूपताप्रयोजकत्वम्, ब्रह्मणो हि अनवधिकातिशयकं स्थिरम्। तदतिरिक्तस्य रूपादेः सातिशयं किञ्चिदपेक्षयातिशयवत् किञ्चिदपेक्षयाल्पम्, अस्थिरञ्च ज्ञानम्, अतो ब्रह्मानन्दरूपेणाम्नायते, विषयाधीनत्वात् सुखरूपतायाः। ब्रह्मज्ञाननिरतिशयस्थिरप्रियतमं ब्रह्मविषयकत्वात्, तज्ज्ञानम् आनन्दः। अतो रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति, ब्रह्मैव सुखम्, परमपुरुष एव स्वयं नित्यसुखरूपः, परस्य स्वज्ञानरूपेण सुखं भवति। इत्थं परत्वप्रयोजकानन्तकल्याणगुणाकरस्य सौलभ्योपयोगि सौशील्यसौन्दर्यादिगुणजलनिधेः सर्वशेषित्वेन समस्त-

कातिशयसौशील्यसौन्दर्यवात्सल्यजलधेः सर्वशेषित्वादात्मनः शेषत्वं प्रति सम्बन्धितयाऽनुसन्धीयमानमनवधिकातिशयप्रीतिविषयं सत् परब्रह्मैवैन-मात्मानं प्रापयतीति ।

ननु चात्यन्तशेषतयैवात्मनोऽनवधिकातिशयं सुखमित्युक्तं भवति । तदेतत्सर्वलोकविरुद्धम्, तथा हि सर्वेषामेव चेतनानां स्वातन्त्र्यमेवेष्ट-तमं दृश्यते, पारतन्त्र्यं दुःखतरम्, स्मृतिश्च—

सर्वं परवशं दुःखं, सर्वमात्मवशं सुखम् ।

तथा च—

सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् ।। इति ।

तदेतत्तदनधिगतदेहातिरिक्तात्मस्वरूपाणां शरीरात्माभिमानं विजृ-म्भितम् । तथा हि शरीरं मनुष्यत्वादिजातिगुणाश्रयपिण्डभूतं स्वतन्त्रं प्रतीयते । तस्मिन्नेवाहमिति संसारिणां प्रतीतिः । आत्माभिमानो यादृशः, तदनुगुणैव पुरुषार्थप्रतीतिः । सिंहव्याघ्रवराहमनुष्ययक्षरक्षःपिशाचदेवदानव-स्त्रीपुंसव्यवस्थितात्माभिमानानां सुखानि व्यवस्थितानि । तानि च परस्पर-विरुद्धानि । तस्मादात्माभिमानानुगुणपुरुषार्थव्यवस्थायां सर्वं समाहितम् ।

---

स्वेतरप्रयोज्यभोग्यरसलीलारसातिशयत्वेन आत्मनो यच्छेषत्वम्, परदेवतातिशया-धानेच्छयैवोपादेयत्वेन, तत्प्रति सम्बन्धितया तन्निरूपितशेषितया निरुक्त्या प्रतिसन्धीय-मानं प्रियतमतया अतिशयेन पौनःपुन्येन च स्मर्यमाणमतिसीमप्रीतिविषयं ब्रह्मैवा-त्मानं प्रापयति ।

ननु निरुक्तशेषत्वं पारतन्त्र्यञ्चानवधिकातिशयसुखमित्युक्तम्, तन्न, परतन्त्र-स्यापुरुषार्थत्वेन दुःखरूपतया व्यवहारात्स्वतन्त्रस्यैव सर्वचेतनानामिष्टतमत्वेन सुखत्वव्यवहारात्, तत्राह—तदेतदित्यादि । इयमुक्तिर्देहानतिरिक्तात्मस्वरूपानभिज्ञाना-मेव यतः सुखदुःखेन स्वातन्त्र्यपारतन्त्र्यप्रयुक्ते; अपि तु कर्मकृतदेहात्माभिमानप्रयुक्ते । तथा हि मनुष्यत्वादिजातिगुणाश्रयपिण्डभूतं शरीरं स्वतन्त्रं प्रतीयते, तत्रात्माभिमान-महं मनुष्यः पशुरित्याद्याकारकमहत्तत्त्वप्रकारकं मनुष्यादिविशेष्यकम् । पशुविशेष्य-काहमर्थप्रकारकज्ञानानुकूलं पशुपोषकरक्षकप्रियहरिततृणादि, तद्विषयत्वात् तृणादि-रपि सुखं पशुविरोधिभक्षकप्रियानुभावो दुःखं तद्विषयो व्याघ्रादिरपि दुःखम् । तथा स्वतन्त्राभिमानोऽहं स्वतन्त्र इति ज्ञानं स्वतन्त्रे आत्माभिमानम्, तदनुकूलं स्वतन्त्रत्वे-नावगतं देहोपयोगि वस्तुज्ञानं विशेषकत्वात्, तद्विषयोऽपि स्वतन्त्रदेहोपयोगि वस्तुसुखं

आत्मस्वरूपं तु देवादिदेहविलक्षणं ज्ञानैकाकारम्, तच्च परशेषतैकस्वरूपम्। यथाऽवस्थितात्माभिमाने तदनुगुणैव पुरुषार्थप्रतीतिः, 'आत्मा ज्ञानमयोऽमलः' इति स्मृतेर्ज्ञानैकाकारता प्रतिपन्ना। "पतिं विश्वस्य" इत्यादिश्रुतिगणैः परमात्मशेषतैकाकारता च प्रतीता। अतः सिंहव्याघ्रादिशरीरात्माभिमानवत् स्वातन्त्र्याभिमानोऽपि कर्मकृतविपरीतात्मकज्ञानरूपो वेदितव्यः। अतः कर्मकृतमेव परमपुरुषव्यतिरिक्तविषयाणां सुखत्वम्। अत एव तेषामल्पत्वमस्थिरत्वञ्च परमपुरुषस्यैव स्वत एव सुखत्वम्। अतस्तदेव स्थिरमनवधिकातिशयञ्च। कं ब्रह्म, खं ब्रह्म, आनन्दो ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य वस्तुनः स्वरूपेण सुखत्वाभावः, कर्मकृतत्वेन चास्थिरत्वं भगवता पराशरेणोक्तम्। नरकस्वर्गसंज्ञे वा पापपुण्ये द्विजोत्तमवस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च कोपाय च यतः, तस्माद्वस्तुवस्त्वात्मकं कुतः। सुखदुःखाद्येकान्तरूपिणो वस्तुनो वस्तुत्वं कुतः। तदेकान्तता पुण्यपापकृतेत्यर्थः। एवमनेकपुरुषापेक्षया कस्यचित्सुखमेव कस्यचिद्दुःखं भवतीत्यव्यवस्थां प्रतिपाद्य एकस्मिन्नपि पुरुषे न व्यवस्थितमित्याह––तदेव प्रीतये भूत्वा

---

स्वतन्त्रात्माभिमानप्रतिकूलं परतन्त्रात्मज्ञानं दुःखं विशेषकत्वात्। परतन्त्रार्थोऽपि दुःखमेवेत्थं सुखदुःखव्यवस्था। आत्मस्वरूपं तु देवादिदेहविलक्षणं ज्ञानैकाकारम्, तच्च परशेषतैकस्वरूपं ज्ञानानन्दपरशेषात्माभिमानानुकूलमेव शेषत्वज्ञानमिति परदेवताविशेषकत्वात् सुखरूपा यथावस्थितजीवस्वरूपे प्रमाणम्। 'आत्मा ज्ञानमयोऽमलः' इति ज्ञानरूपत्वं पतिं विश्वस्येत्यादिना शेषतारूपत्वं परमात्मन इति स्वरूपे स्वात्माभिमानविषयत्वाच्छेषतादिसुखं कर्मकृतस्वातन्त्र्याभिमानविषयत्वादज्ञानिनः स्वातन्त्र्यसुखम्। अतो ब्रह्मातिरिक्तविषयाणां रूपादीनां कर्मकृतरूपादि स्वात्माभिमानमस्थिरसुखत्वं परमपुरुषस्यैव स्वतः सुखत्वस्वाभाविकत्वेन तारतम्याभावादनन्तं स्थिरं निरवधिकातिशयम्। कं ब्रह्म, खं ब्रह्म, आनन्दो ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः, कर्मकृतस्य वस्तुनोऽस्थिराल्पत्वेन कर्मकृततद्विषयाभिमानम्, तथा सुखमपि विशेषकोऽपि तथाऽस्थिरोऽल्पश्च। कर्मकृतस्वरूपादेः सुखत्वं न स्वरूपतोऽपि तु कर्मकृतं यत्तत्रात्माभिमानं तत्कृतम्। भगवता पराशरेणायमर्थ उक्त', नरकस्वर्गसंज्ञे हि पापपुण्ये द्विजोत्तमवस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च कोपाय च मतस्तस्माद् वस्तुवस्त्वात्मकं कुतः? सुखादिरूपेणैकस्य वस्तुनो वर्तमानत्वाद् वस्तुत्वं कुतः?

पुनर्दुःखाय जायते। तदेव कोपाय यतः प्रसादाय च जायते, तस्माद्दुःखात्मकं नास्ति, न किञ्चित् सुखात्मकम्, इति सुखदुःखात्मकं सर्वस्य वस्तुनः कर्मकृतं न वस्तुस्वरूपकृतम्, अतः कर्मावसाने तदपैतीत्यर्थः।

यत्तु सर्वं परवशं दुःखमित्युक्तम्, तत्परमपुरुषव्यतिरिक्तानां परस्परं शेषशेषिभावाभावात् तद्व्यतिरिक्तं प्रति शेषतादुःखमेवेत्युक्तम्। "सेवा श्ववृत्तिराख्याता" इत्यत्राप्यसेव्यसेवा श्ववृत्तिरेवेत्युक्तम्। सह्याश्रमैस्सदोपास्यस्समस्तैरेक एव चेति सर्वैरात्मयाथात्म्यवेदिभिः सेव्यः पुरुषोत्तम एक एव। यथोक्तं भगवता—

मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते[1]॥ इति।

इयमेव भक्तिरूपा सेवा। ब्रह्मविदाप्नोति परम्, तमेवं विद्वानमृत इह भवति, ब्रह्म वेद, ब्रह्मैव भवतीत्यादिषु वेदनशब्देनाभिधीयत

इत्थं वस्तुनः सुखादिरूपता विलक्षणकर्म-विलक्षणपुरुषापेक्षाकृता, स्वरूपतो न किञ्चत्सुखं न किञ्चिद् दुःखम्। अतः कर्मावसाने तदपैति, यत्तु सर्वं परवशं दुःखमित्यादि, तद् ब्रह्मव्यतिरिक्तानां शेषशेषिभावाभावाद् ब्रह्मव्यतिरिक्तं प्रति शेषता-दुःखमेव, सेवा श्ववृत्तिराख्यातेत्याद्यपि असेव्यसेवाविषयं स पुरुषोत्तम एक एव सदोपास्यः सह्याश्रमैरिति भक्तियोगेन सेवते इत्यादिवचनाद् भगवच्छेषतानुसन्धानं विधेयम्, इयमेव भक्तिरूपा परभक्तिरूपा 'ब्रह्मविदाप्नोति परं तमेवं विद्वानमृत इह भवति' इत्यत्रोपायोपेयभाव उक्तः। अत्र वेदनं पराभक्तिः, 'यमेवैष वृणुते' इति विशेषणात्। कथं तद्विशेषणबलाद् वेदनस्य भक्तिरूपता, तामेवोपपादयति—यमेवैष वृणुते इति। भगवता वरणीयत्वं प्रतीयते। वरणीयत्वं फलोपधायकस्वप्रापकत्वेनाङ्गीकारविषयत्वम्, वर्णीयश्च प्रियतमस्तथाङ्गीकारविषय उत्कृष्टप्रीतिविषयः, प्रियतमश्च स एव यस्य भगवति निरवधिकातिशयप्रीतिः। एवञ्च ब्रह्मविदिति श्रुत्या तथा वेदनं विधेयं मोक्षोपायतयाऽवगन्तव्यं यद्वेदनं भगवति निरवधिकातिशयप्रीतिरूपं भवेदिति उक्तं विशेषणादिति। अत्रार्थे भगवद्वचनं प्रमाणम्—प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय इति। स्वनिष्ठप्रियत्वस्यात्यर्थस्योपासकनिष्ठात्यर्थप्रियत्वस्य प्रयोजकत्वमुक्तम्। तस्मात् परभक्तिरूपापन्नमेव वेदनं तत्त्वतो भगवद्भक्तिसाधनम्। सत्त्वेन ब्रह्मस्वरूपेणेत्यर्थः। तेन पुत्रत्वेन दशरथकर्तृकब्रह्मप्राप्तौ मोक्षरूपता व्यावृता। यथोक्तं भगवता द्वैपायनेन

१. श्रीमद्भगवद्गीता—१४।२६।

इत्युक्तम् । "यमेवैष वृणुते' इति भगवता वरणीयत्वं प्रतीयते, वरणीयश्च प्रियतमः । यस्य भगवत्यनवधिकाशया प्रीतिर्जायते, स एव भगवतः प्रियतमः । तदुक्तं भगवता—

प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । इति ।

तस्मात्परभक्तिरूपापन्नमेव तत्त्वतो भगवत्प्राप्तिसाधनम् । यथोक्तं भगवता द्वैपायनेन मोक्षधर्मे सर्वोपनिषद्व्याख्यानरूपम्—

न सदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
भक्त्या च धृत्या च समाहितात्मा............ ॥

भक्त्या पुरुषोत्तमं पश्यति, साक्षात्करोति प्राप्नोतीत्यर्थः । "भक्त्या त्वनन्यया शक्यः[1]" इत्यनेनैकार्थ्यात् । भक्तिश्च ज्ञानविशेष एवेति सर्वमुपपन्नम् ।

सारासारविवेकज्ञा गरीयांसो विमत्सराः ।
प्रमाणतन्त्राः सन्तीति कृतो वेदार्थसङ्ग्रहः ॥ इति ।

❀❀❀

---

मोक्षधर्मे सर्वोपनिषद्व्याख्यानरूपम्—न सदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यतीत्यादि भक्त्या च धृत्या च समाहितात्मेत्यन्तेन । निरुक्तलक्षणभक्त्या पुरुषोत्तमं साक्षात्कारोति प्राप्नोतीत्यर्थः । 'भक्त्या त्वनन्यया शक्यः' इत्यादि भगवद्वचनेनैकार्थ्यात्, भक्तिश्च ज्ञानविशेष एवेति सर्वमुपपन्नम्, वाचोयुक्तिप्रसाधितम् । स्वपक्षस्थापन-परपक्षप्रतिक्षेप-प्रमाणं यदुपन्यस्तेनान्यदपि चोद्यपरिहारादिकं बोध्यम् । अस्य प्रबन्धस्यातिगम्भीरता-प्रदर्शनाय सारासारविवेकज्ञा इति प्रतिपन्नविरुद्धार्थेषु प्रमाणतर्कैर्बलाबलभाग-विदः गरीयांसो बहु श्रुताः, बहुश्रुत्याभावे प्राबल्यदौर्बल्यविवेकक्षमत्वन्न सम्भवति । विमत्सराः—परोत्कर्षसुखमानिनः, प्रमाणतन्त्राः—प्रमाणसम्मतैस्तर्कैरर्थनिरूपकाः, न स्वापेक्षितेऽर्थे बलेनार्थनायकाः, कालो ह्ययं निरवधिर्विपुला च पृथिवीति वचनानुसारेण केचित् कुत्रचिद् यदा कदाचिदेवंविधाः पुरुषाः भविष्यन्तीति तेषामभिमतसिद्धये अयं वेदार्थसंग्रहः कृत इत्यर्थः ।

॥ इति श्रीगोरक्षपुरमण्डलान्तर्गतकोडराग्रामवास्तव्यश्रीपण्डितयदुनाथशुक्लात्मज-१००८श्रीबलरामाचार्यचरणाश्रितश्रीरामकृष्णाचार्य ( पण्डितरामवदनशुक्ल ) श्रीराम-देशिकसंस्कृतमहाविद्यालयप्रधानाचार्यचरकृता वेदार्थसङ्ग्रहचन्द्रिकातिलकः समाप्तः ॥

❀❀❀

---

१. श्रीमद्भगवद्गीता—११।५४ ।

